SARANGADHARA SANHITA

A

# TREATISE

ON

# MEDICINE

COMPILED BY

## SARANGADHARA

Çārñga-dhara. Çārnga-dhara-saṁhitā

EDITED BY

PANDIT JIBANANDA VIDYASAGARA B. A.

*Superintendent, Free Sanskrit College.*



**CALCUTTA:**

PRINTED AT THE

KAVYAPRAKASIKA PRESS.

**1874.**

*To be had from Pandit Jibananda Vidyasagara B. A. Superintendent. Free Sanskrit College of Calcutta.*

पण्डित-कुल-तिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

| | | | |
|---|---|---|---|
| १ | आशुबोध व्याकरणम् | | ३। |
| २ | धातुरूपादर्शः | | २ |
| ३ | शब्दस्तोम-महानिधि [ संस्कृत अभिधान ] | | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | ... | ११ |
| ५ | सिद्धान्तविन्दुसार [ वेदान्त ] | ... | ॥ |
| ६ | तुलादानादि पद्धति [ वङ्गाक्षरैः ] | ... | ४॥ |
| ७ | गयाश्राद्धादि पद्धति | .. | १ |
| ८ | शब्दार्थ रत्न | ... | ॥। |
| ९ | वाक्यमञ्जरी [ वङ्गाक्षरैः ] | ... | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | ... | १ |
| १२ | मुद्राराक्षस नाटक—सटीक | ... | १॥ |
| १३ | रत्नावली | ... | ॥। |
| १४ | मालविकाग्निमित्र—सटीक | ... | १॥ |
| १५ | धनञ्जय विजय—सटीक | ... | । |
| १६ | महावीरचरित | ... | १॥ |
| १७ | साङ्ख्यतत्त्व कौमुदी—सटीक | ... | २ |
| १८ | वैयाकरणभूषणसार | ... | ॥। |
| १९ | लीलावती | ... | ।॥ |
| २० | बीजगणित | ... | १ |
| २१ | शिशुपालबध—सटीक [ माघ ] | ... | ६ |
| २२ | किरातार्जुनीय—सटीक [ भारवी ] | ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड सटीक | ... | १ |
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ... | ॥। |
| २६ | वाचस्पत्यम् [ संस्कृत बृहदभिधान ] | ... | ६० |
| २७ | कादम्बरी—सटीक | .. | ४ |
| २८ | राजप्रशस्ति | ... | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | | ४ |
| ३० | सर्व्वदर्शनसंग्रह | ... | १ |
| ३१ | भामिनीविलास—सटीक | ... | १ |
| ३२ | हितोपदेश—सटीक | ... | १ |

# शार्ङ्गधरसंहिता।

——000——

दामोदर-सूनुना श्रीशार्ङ्गधरेण

विरचिता।

——000——

वि, ए, उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम्।

कलिकातानगरे

काव्यप्रकाश-यन्त्रे

मुद्रिता।

इं १८७४

श्रीश्रीगणेशाय नमः।

अथ शार्ङ्गधरः।

पूर्व्वखण्डः।

प्रथमोऽध्यायः।

श्रियं स दद्याद्भवतां पुरारिर्यदङ्गतेजः प्रसरे भवानी।
विराजते निर्म्मलचन्द्रिकायां महौषधीव ज्वलिता हिमाद्रौ १।
प्रसिद्धयोगा मुनिभिः प्रयुक्ताश्चिकित्सकैर्ये बहुशोऽनुभूताः।
विधीयते शार्ङ्गधरेण तेषां सुसंग्रहः सज्जनरञ्जनाय॥२॥
हेत्वादिरूपाकृति सात्म्यजातिभेदैः समीक्ष्यातुरसर्व्वरोगान्।
चिकित्सितं कर्षणबृंहणाख्यं कुर्व्वीत वैद्योविधिवत्सुयोगैः॥३॥
दिव्यौषधीनां बहवः प्रभेदा वृन्दारकाणामिव विस्फुरन्ति।
ज्ञात्वेति सन्देहमपास्य धीरैःसम्भावनीया विविधप्रभावाः॥४॥
स्वाभाविकागन्तुककायिकान्तरा रोगा भवेयुः किल कर्मदोषजाः।
तच्छेदनार्थं दुरितापहारिणः श्रेयोमयान् योगवरान्नियो-
जयेत्॥५॥
प्रयोगानागमात्सिद्धान्प्रत्यक्षादनुमानतः।
सर्व्वलोकहितार्थाय वक्ष्याम्यनतिविस्तरात्॥६॥
प्रथमं परिभाषा स्याद्भैषज्याख्यानकं तथा।
नाडीपरीक्षादिविधि स्ततो दीपनपाचनम्॥७॥

ततः कलादिकाख्यानमाहारादिगतिस्तथा ।
रोगाणां गणना चैव पूर्वखण्डोऽयमीरितः ॥ ८ ॥
स्वरसः क्वाथफाण्टौच हिमः कल्कश्च चूर्णकम् ।
तथैव गुटिकालेहौ स्नेहःसन्धानमेवच ॥ ९ ॥
धातुशुद्धिरसाश्चैव् खण्डोऽयं मध्यमः स्मृतः ।
स्नेहपानं स्वेदविधिर्वमनञ्च विरेचनम् ॥१० ॥
ततस्तु स्नेहवस्तिः स्यात्ततश्चापि निरूहणम् ।
ततश्चापुरत्तरोवस्ति स्ततो नस्यविधि र्मतः ॥ ११ ॥
धूमपानविधिश्चैव गण्डूषादिविधिस्तथा ।
लेपादीनां विधिःस्यातस्तथा शोणितविश्रुतिः ।
नेत्रकर्म्मप्रकारश्च खण्डः स्यादुत्तरस्त्वयम् ॥ १२ ॥
द्वात्रिंशद्भिमितिध्यायैर्युक्तेयं संहिता स्मृता ।
षड्विंशतिशतान्यत्र श्लोकानां गणितानि च ॥ १३॥
[परिभाषा ] न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोगकार्य्यार्थं मानमत्रोच्यते मया ॥ १४ ॥
त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशतापरमाणुभिः ।
त्रसरेणुस्तु पर्य्यायनाम्ना वंशी निगद्यते ॥ १५॥
जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
तस्य त्रिंशत्तमो भागः परमाणु रिति स्मृतः ॥ १६ ॥
जालान्तरगतैः सूर्य्यकरै र्वंशी विलोक्यते
षड्वंशीभि र्मरीचिः स्यात्ताभिः षड्भिस्तु राजिका ।
तिसृभीराजिकाभिश्च सर्षपः प्रोच्यते बुधैः ॥ १७॥
यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्

षड्भिस्तु रत्तिकाभिः स्यान्माषको हेमधान्यकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते ॥ १८ ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते ॥ १९ ॥
कोलद्वयञ्च कर्षः स्यात् प्रोक्तः पाणिमानिका ।
अक्षंपिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥ २० ॥
विडालपदकञ्चैव तथा षोडशिका मता ।
करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥ २१ ॥
उदुम्बरञ्च पर्य्यायैः कर्षएव निगद्यते ।
स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ॥ २२ ॥
शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रञ्चतुर्थिका ।
प्रकुञ्चः षोडशी विल्वं पलमेवात्र कीर्त्तते ॥ २३ ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते ।
प्रसृतिभ्यामञ्जलिः स्यात् कुडवोऽर्द्धशरावकः ॥ २४ ॥
अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥ २५ ॥
शरावाभ्यां भवेत् प्रस्थश्चतुःप्रस्थै स्तथाढकम् ।
भाजनं कांसपात्रञ्च चतुःषष्टिपलञ्च तत् ॥ २६ ॥
चतुर्भिराढकैर्द्रोणः कलशोनल्वणोर्म्मणः ।
उन्मानञ्च घटोराशिर्द्रोणपर्यायसंज्ञितः ॥ २७ ॥
द्रोणाभ्यां सूर्पकुम्भौच चतुःषष्टिशरावकः ।
सूर्पाभ्याञ्च भवेद्द्रोणी वाहोगोणी च सा स्मृता ॥ २८ ॥
गोणी चतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।

चतुःसहस्रपलिका षण्नवत्यधिका च सा ॥ २९ ॥
पलानां द्विसहस्रश्च भार एकः प्रकीर्त्तितः ।
तुलापलशतं ज्ञेयं सर्वत्रैवैष निश्चयः ॥३० ॥
माषटङ्काक्षविल्वानि कुडवः प्रस्थमाढकम् ।
राशिर्गोणीखारिकेति यथोत्तरचतुर्गुणाः ॥ ३१ ॥
गुञ्जादिमानमारभ्य यावत्स्यात् कुडवस्थितिः ।
द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ॥ ३२ ॥
प्रस्थादिमानमारभ्य द्विगुणं तत् द्रवार्द्रयोः ।
मान न्तथा तुलायास्तु द्विगुणं न क्वचित् स्मृतम् ॥३३ ॥
मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् ।
विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् ॥३४ ॥
यथौषधन्तु प्रथमं यस्य योगस्य कथ्यते ।
तन्नाम्नैव स योगोहि कथ्यते च विनिश्चयः ॥ ३५ ॥

[ इति मागधपरिभाषा ]

कालिङ्गं मागधं चैव द्विविधं मानमुच्यते ।
कालिङ्गात् मागधं श्रेष्ठं मानं मानविदो विदुः ॥३६॥
स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम् ।
प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् ॥ ३७ ॥
यतो मन्दाग्नयो ह्रस्वा हीनसत्वा नराः कलौ ।
अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसम्मता ॥३८॥
यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः ।
यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ॥३९॥
माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित् ।

स्याच्चतुर्माषकैः शाणः सनिष्कः टङ्क एव च ॥४०॥
गद्याणो माषकैः षड्भिःकर्षःस्याद्दशमाषकः ।
चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ।
चतुःपलैश्च कुडवं प्रस्थाद्याः पूर्व्ववन्मताः ॥४१॥

इति कालिङ्गपरिभाषा ।

नवान्येव हि योज्यानि द्रव्याण्यखिलकर्म्मसु ।
विना विड़ङ्गकृष्णाभ्यां गुडधान्याज्यमाक्षिकैः
गुड़ूचीकुटजोवासाकुष्माण्डश्च शतावरी ॥ ४२ ॥
अश्वगन्धा सहचरी शतपुष्पा प्रसारिणी ।
प्रयोक्तव्या सदैवार्द्रा द्विगुणा नैव कारयेत् ।
शुष्कं नवीनं यद्द्रव्यं योज्यं सकलकर्म्मसु ॥ ४३ ॥
आर्द्रञ्च द्विगुणं युञ्ज्यात् एष सर्व्वत्र निश्चयः ।
कालेऽनुक्ते प्रभातं स्यादङ्गेऽनुक्ते जटा भवेत् ।
भागेऽनुक्ते तु साम्यं स्यात्पात्रेऽनुक्ते च मृण्मयम् ॥ ४४ ॥
द्रवेऽनुक्ते जलं ग्राह्यं तैलेऽनुक्ते तिलोद्भवम् ।
एकमप्यौषधं योगे यस्मिन् यत् पुनरुच्यते ।
मानतो द्विगुणं प्रोक्तं तद्द्रव्यं तत्त्वदर्शिभिः ॥४५॥
चूर्णस्नेहा सवालेहाः प्रायशश्चन्दनान्विताः ।
कषायलेपयोःप्रायो युज्यते रक्तचन्दनम् ॥४६॥
गुणहीनं भवेद्वर्षादूर्द्धं तद्रूपमौषधम् ।
मासद्वयात्तथाचूर्णं हीनवीर्य्यत्वमाप्नुयात् ॥४७॥
हीनत्वं गुटिकालेहौ लभेते वत्सरात्परम् ।
हीनाः स्युर्घृततैलाद्या श्चतुर्मासाधिकात्तथा ॥४८॥

ओषध्यो लघुपाकाः स्युर्निर्वीर्य्या वत्सरात्परम् ।
पुराणाः स्युर्गुणैर्युक्ता आसवा धातवोरसाः ॥४८॥
व्याधेरयुक्तं यद्द्रव्यं गणोक्तमपि तत्त्यजेत् ।
अनुक्तमपि यद्युक्तं योजयेत्तत्र तद् बुधः ॥५०॥

[ इति युक्तायुक्त विचारः ]

आग्नेया विन्ध्यशैलाद्याः सौम्यो हिमगिरि र्मतः ।
अतस्तदौषधानि स्युरनुरूपाणि हेतुभिः ।
अन्येष्वपि प्ररोहन्ति वनेषूपवनेषु च ॥५१॥
गृह्णीयात्तानि सुमनाः शुचिः प्रातः सुवासरे ।
आदित्यसम्मुखो मौनी नमस्कृत्य शिवं हृदि ।
साधारणधराद्रव्यं गृह्णीयादुत्तराश्रितम् ॥५२॥
वल्मीककुत्सितानूपश्मशानोषरमार्गजाः ।
जन्तुवह्निहिमव्याप्तानौषध्यःकार्य्यसाधकाः ॥५३॥
शरद्यखिलकार्य्यार्थं ग्राह्यं सरसमौषधम् ।
विरेकवमनार्थञ्च वसन्तान्ते समाहरेत् ॥५४॥
अतिस्थूलजटायास्तासां ग्राह्यास्त्वचो भ्रुकम् ।
गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान् ॥५५॥
न्यग्रोधादेस्त्वचो ग्राह्याः सारः स्याद्बीजकादितः ।
तालीसादेश्च पत्राणि फलं स्यात्त्रिफलादितः ।
धातक्यादेश्च पुष्पाणि स्नुह्यादेःचीरमाहरेत् ॥५६॥

---

द्वितीयोऽध्यायः ।

भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः ।
कषायांश्च विशेषेण तत्र भेदस्तु दर्शितः ॥१॥
ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम् ।
किञ्चित्सूर्य्योदये जाते तथा दिवसभोजने ॥
सायन्तने भोजने च मुहुश्चापि तथा निशि ॥२॥
प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः ।
लेपनार्थं च भैषज्यं प्रभाते तत् समाहरेत् ।
एवं स्यात् प्रथमःकालो भैषज्यग्रहणे नृणाम् ॥३॥ प्रथमकालः ।
भैषज्यं विगुणेऽपाने भोजनाग्रे प्रशस्यते ।
अरुचो चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत् ॥४॥
समानवाते विगुणे मन्देऽग्नावग्निदीपनम् ।
दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक् ॥५॥
व्यान-कोपे च भैषज्यं भोजनान्ते समाहरेत् ।
हिक्का-चेपककम्पेषु पूर्व्वमन्ते च भोजनात् ।
एवं द्वितीयकालश्च प्रोक्तो भैषज्य-कर्मणि ॥६॥ द्वितीयकालः ।
उदाने कुपिते वाते स्वरभङ्गादिकारिणि ।
ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने ॥ ७ ॥
प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते च दीयते ।
औषधं प्रायशो धीरैःकालोऽयं स्यात्तृतीयकः॥८॥ तृतीयकालः।
मुहुर्मुहुश्च तृट्छर्दि-हिक्काश्वासगरेषु च ।
सान्नञ्च भेषजं दद्यादितिकालश्चतुर्थकः ॥९॥ चतुर्थकालः ।
ऊर्द्ध्वजत्रु विकारेषु लेखने बृंहणे तथा ।

पाचनं शमनं देयमनन्नं भेषजं निशि ।
इतिपञ्चमकालश्च प्रोक्तोभैषज्यहेतवे ॥१०॥ पञ्चमकालः ।
द्रव्ये रसो गुणो वीर्य्यं विपाकः शक्तिरेव च ।
सम्बन्धेन क्रमादेताः पञ्चावस्थाः प्रकीर्त्तिताः ॥११॥
मधुरोऽम्लः पटुश्चैव तिक्तः कटु-कषायकः ।
इत्येते षड्रसा ख्याता नानाद्रव्य-समाश्रिताः ॥१२॥
धराम्बु-क्ष्मानलजलज्वलनाकाशमारुतैः ।
वाय्वग्निक्ष्मानिलैर्भूतद्वयैःरसभवः क्रमात् ॥१३॥ इति रसाः ।
गुरुःस्निग्धश्च तीक्ष्णश्च रूक्षो लघुरिति क्रमात् ।
धराम्बुवह्निपवनव्योम्नां प्रायो गुणाःमताः ।
एष्वेवान्तर्भवन्त्यन्ये गुणेषु गुणसञ्चयाः ॥ १४ ॥ इति गुणाः ।
वीर्य्यमुष्णं तथाशीतं प्रायशो द्रव्यसंश्रयम् ।
यत्सर्व्वमग्निसोमीयं दृश्यते भुवनत्रयम् ।
अत्रैवान्तर्भविष्यन्ति वीर्य्याण्यन्यानि यान्यपि ॥१५॥ वीर्य्यम् ।
त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ।
मिष्टः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।
कषायकटुतिक्तानां पाकःस्यात् प्रायशः कटुः ॥१६॥
मधुराज्जायते श्लेष्मा पित्तमम्लाच्च जायते ।
कटुकाज्जायते वायुःकर्माण्येतानि पाकतः ॥१७॥ विपाकः ।
प्रभावस्तु यथा धात्री लकुचस्य रसादिभिः ।
समापि कुरुते दोषत्रितयस्य विनाशनम् ॥१८॥
क्वचित्तु केवलं द्रव्यं कर्म कुर्य्यात् प्रभावतः ।
ज्वरं हन्ति शिरो बद्धा सहदेवीजटा यथा॥ १९॥ प्रभावः।

क्वचिद्रसो गुणो वीर्य्यं विपाकः शक्तिरेव च ।
कर्म स्वं स्वं प्रकुर्व्वन्ति द्रव्यमाश्रित्य संस्थिताः ॥२० ॥
चयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि ।
ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात् ॥२१ ॥
ग्रीष्मे मेषवृषौ प्रोक्तौ प्रावृट्मिथुनकर्कयोः ।
सिंहकन्ये स्मृतावर्षातुलावृश्चिकयोः शरत् ।
धनुर्ग्राहौच हेमन्तो वसन्तः कुम्भमीनयोः ॥२२ ॥
ग्रीष्मे सञ्चीयते वायुः प्रावृट्काले प्रकुप्यति ।
वर्षासु चीयते पित्तं शरत्काले प्रकुप्यति ॥२३ ॥
हेमन्ते चीयते श्लेष्मा वसन्ते च प्रकुप्यति ।
प्रायेण प्रशमं याति स्वयमेव समीरणः ॥२४ ॥
शरत्काले च हेमन्ते पित्तं प्रावृट्ऋतौ कफः ।
कार्त्तिकस्य दिनान्यष्टावष्टावाग्रहणस्यच ।
यमदंष्ट्रा समाख्याता स्वल्पभुक्तो हि जीवति ॥२५ ॥
चयकोपसमा दोषा विहाराहारसेवनैः ॥
समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्य्ययम् ॥२६ ॥
लघुरूक्षमिताहारादतिशीतात्क्रमात्तथा ।
प्रदोषे कामशोकाभ्यां भी-चिन्ता-रात्रि-जागरैः ॥२७ ॥
अभिघातादपाङ्गाहाज्जीर्णेऽन्ने धातुसंचयात् ।
वायुःप्रकोपं यात्येभिः विपरीतैश्च शाम्यति ॥ २८ ॥
विदाहिकटुकाम्लोष्णभोज्यैरत्युष्णसेवनात् ।
मध्याह्ने क्षुत्तृषारोधाज्जीर्य्यत्यन्नेऽर्द्धरात्रके ।
पित्तं प्रकोपं यात्येभिः विपरीतैश्च शाम्यति ॥ २९ ॥

मधुरस्निग्धशीतादिभोज्यैर्दिवसनिद्रया ।
मन्देऽग्नौच प्रभातेच भुक्तमात्रे तथा श्रमात् ।
श्लेष्मप्रकोपं यात्येभिः प्रत्यनीकैश्च शाम्यति ॥३० ॥

---

## तृतीयोऽध्यायः ।

करस्याङ्गुष्ठमूले या धमनी जीवसाक्षिणी ।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ।
नाड़ी धत्ते मरुत्कोपे जलौका सर्पयोर्गतिम् ॥ १ ॥
कुलिङ्गकाकमण्डूकगतिं पित्तस्य कोपतः ।
हंस पारावतगतिं धत्ते श्लेष्मप्रकोपतः ॥ २ ॥
लावतित्तिरवर्त्तीरगमनं सन्निपाततः ।
कदाचिन्मन्दगमना कदाचिद्वेगवाहिनी ।
द्विदोषकोपतो ज्ञेया हन्ति च स्थानविच्युता ॥ ३ ॥
स्थित्वा स्थित्वा चलति या सा स्मृता प्राणनाशिनी ।
अतिक्षीणाच शीताच जीवितं हन्त्यसंशयम् ॥४ ॥
ज्वरकोपे तु धमनी सोष्णा वेगवती मता ।
कामक्रोधाद्वेगवहा क्षीणा चिन्ताभयप्लुता ॥५ ॥
मन्दाग्नेः क्षीणधातोश्च नाडी मन्दतरा भवेत् ।
असृक्पूर्णा भवेत्कोष्णा गुर्वी सामागरीयसी ॥ ६ ॥
लघ्वीवहति दीप्ताग्नेस्तथा वेगवती मता ।
सुखितस्य स्थिरा ज्ञेया तथा बलवती स्मृता ।
चपला क्षुधितस्य स्यात् तृप्तस्य वहति स्थिरा ॥७॥ नाड़ीपरीक्षा।

स्वप्नेषु नग्नान्मुण्डांश्च रक्तकृष्णाम्बरावृतान् ।
व्यङ्गांश्च विकृतान् कृष्णान् सपाशान् सायुधानपि ॥ ८ ॥
बध्नतो निघ्नतश्चापि दक्षिणां दिशमाश्रितान् ।
महिषोष्ट्रखरारूढान्स्त्रीपुंसोर्यस्तु पश्यति ।
स स्वस्थो लभते व्याधिं रोगी यात्येव पञ्चताम् ॥९ ॥
अधो यो निपतत्युच्चाज्जलेऽग्नौ वा विलीयते ।
श्वापदैर्हन्यते योऽपि मत्स्याद्यैर्गिलितो भवेत् ॥१० ॥
यस्य नेत्रे विलीयेते दीपो निर्वाणतां व्रजेत् ।
तैलं सुरां पिवेद्वापि लौहं वा लभते तिलान् ॥ ११ ॥
पक्वान्नं लभतेऽश्नाति विशेत्कुध्यञ्च मातरम् ।
स स्वस्थो लभते रोगं रोगी यात्येव पञ्चताम् ॥१२ ॥
दुःस्वप्नान्येव मादीनि दृष्ट्वा ब्रुयान्न कस्यचित् ।
स्नानं कुर्यादुषस्येव दद्याद्धेमतिलानिच ॥१३ ॥
पठेत् स्तोत्राणि देवानां रात्रौ देवालये वसेत् ।
कृत्वैवं त्रिदिनं मर्त्यो दुःस्वप्नात्परिमुच्यते ॥१४ ॥
स्वप्नेषु यः सुरान् भूयान् जीवतः सुहृदो द्विजान् ।
गोसमिद्धाग्नितीर्थानि पश्येत् सुखमवाप्नुयात् ॥१५ ॥
तीर्त्वा कलुषनीराणि जित्वा शत्रुगणानपि ।
आरुह्य सौधगोशैलकरिवाहान् सुखीभवेत् ॥१६॥
शुभ्रपुष्पाणि वासांसि मांसमत्स्यफलानि च ।
आममांसाशनं स्वप्ने धनारोग्याप्तये विदुः । ॥१७ ॥
जलौकाभ्रमरीसर्पोमक्षिका वापि यं दशेत् ।
रोगी स भूयादरोगः स्वस्थो धनमवाप्नुयात् ॥ १८

अगम्यागमनं लेपो विष्टाया रुदितं मृतिः।
रोगी स भूयात् आरोग्यः स्वस्थो धन मवाप्नुयात् ॥ १९ ॥
स्वप्नलक्षणम्

दूताः स्वजातयोऽव्यङ्गाः पटवो निर्मलाम्बराः।
सुखिनोऽश्ववृषारूढ़ा शुभ्रपुष्पफलैर्युताः ॥ २० ॥
सुजातश्चः सुचेष्टाश्च सजीवदिशि संश्रिताः।
भिषजं समये प्राप्ता रोगिणः सुखहेतवे॥ २१ ॥ दूतलक्षणम्।
वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते।
न शुभं सौम्यशकुनं प्रदीप्तञ्च सुखावहम् ॥ २२॥
चिकित्सां रोगिणः कर्त्तुं गच्छतो भिषजः शुभम्।
यात्रायां सौम्य शकुनं प्रोक्तं दीप्तं न शोभनम् ॥२३॥ शकुनम्।
निजप्रकृतिवर्णाभ्यां युक्तः सत्वेन संयुतः।
चिकित्स्यो भिषजारोगीवैद्यभक्तोजितेन्द्रियः॥२४॥रोगीलक्षणम्



चतुर्थोऽध्यायः।

पचेन्नामं न वह्निकृच्च दीपनं तद्यथामिषम्।
पचत्यामं न वह्निञ्च कुर्य्याद्यत्तद्धि पाचनम्।
नागकेशरवद्विन्द्याच्चित्रो दीपन-पाचनः ॥ १ ॥
न शोधयति न द्वेष्टि समान्दोषांस्तथोद्गतान्।
समीकरोतिव जृम्भे यं शमनं तद्यथा मृता ॥२ ॥
कृत्वा पाकं मलानां यद्भित्त्वा बन्धमधो नयेत्।
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ताहरीतकी ॥३॥
पक्तव्यं यदपक्त्वैव क्लिष्टं कोष्ठे मलादिकम्।

नयत्यधः स्रंसनन्तद्यथा स्यात् कृतमालकः ॥ ४ ॥
मलादिकमबद्धं यद्‌ बद्धं वा पिण्डितं मलैः ।
भित्त्वाधः पातयति तद्भेदनं कटुकी यथा ॥५ ॥
विपक्वं यदपक्वं वा मलादिद्रवतां नयेत् ।
रेचयत्यपितद्‌ज्ञेयं रेचनं त्रिवृता यथा ॥६ ॥
अपक्वं पित्तश्लेष्माणं बलादूर्द्धं नयेत्तु यत् ।
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा ॥ ७॥
स्थानाद्बहिर्नयेदूर्द्धमधो वा मलसञ्चयम् ।
देहे तच्छोधनं यत्स्याद्देवदालीफलं यथा ॥ ८ ॥
श्लिष्टान् कफादिकान्दोषानुन्मूलयति यद्बलात् ।
छेदनं तद्यथा चारं मरिचानि शिलाजतु ॥९ ॥
धातून्मलान्वा देहस्य विशोष्योल्लिखयेच्च यत् ।
लेखनं तद्यथा चौद्रं नीरमुष्णञ्च वायवाः ॥१० ॥
दीपनं पाचनं यत्स्यादुष्णत्वाद्‌द्रवशोषकम् ।
ग्राही तच्च यथा शुण्ठी जीरकं गजपिप्पली ॥११ ॥
रौक्ष्याच्छैत्यात् कषायत्वाद्‌ लघुपाकाच्च यद्भवेत् ।
वातकृत् स्तम्भनं तत्स्याद्यथावत्सकटुण्टुकी ॥ १२ ॥
रसायनञ्च तज्ज्ञेयं यज्जराव्याधिनाशनम् ।
यथाऽमृतारुदन्तीच गुग्गुलुश्च हरीतकी ॥१३ ॥
यस्माद्‌द्रव्याद्भवेत् स्त्रीषु हर्षो वाजीकरश्च तत् ।
यथा नागवलाद्याः स्युर्बीजञ्च कपिकच्छुजम्॥ १४ ॥
यस्माच्छुक्रस्य वृद्धिःस्याच्छुक्रलं हि तदुच्यते ।
यथाश्वगन्धा मुशली शर्कराच शतावरी ॥१५॥

दुग्धं माषाश्च भल्लातफलमज्जामलानि च ।
प्रवर्त्तकानि कथ्यन्ते जनकानि च रेतसः ॥१६॥
प्रवर्त्तनं स्त्रीशुक्रस्य रेचनं बृहतीफलम् ।
जातीफलं स्तम्भनं स्यात् कालिङ्गं चयकारि च ॥१७॥
देहस्य सूक्ष्मछिद्रेषु विशेद्यःसूक्ष्ममुच्यते ।
तद्यथा सैन्धवं चौद्रं निम्बस्तैलं रुवूद्भवम् ॥१८॥
पूर्व्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति ।
व्यवायि तद्यथा भङ्गाफेनञ्चाहिसमुद्भवम् ॥१९॥
सन्धिबन्धांस्तु शिथिलान् यत् करोति विकाशि तत् ।
विश्लेष्यौजश्च धातुभ्यो यथा क्रमुककोद्रवौ ॥२०॥
बुद्धिं लुम्पति यद्द्रव्यं मदकारी तदुच्यते ।
तमोगुणप्रधानञ्च यथामद्यं सुरादिकम् ॥२१॥
व्यवायि च विकाशि स्यात् सूक्ष्मं छेदि मदावहम् ।
आग्नेयं जीवितहरं योगवाहि स्मृतं विषं ॥२२॥
निजवीर्य्येण यद्द्रव्यं स्रोतोभ्योदोषसञ्चयम् ।
निरस्यति प्रमाथि स्यात्तद्यथामरिचं वचा ॥२३॥
पैच्छिल्याद्गौरवाद्द्रव्यं रुद्धा रसवहाः शिराः ।
धत्ते यद्गौरवं तत्स्यादभिष्यन्दि यथा दधि ॥२४॥

---

अथ पञ्चमोऽध्यायः ।

धात्वाशयान्तरस्थस्तु यःक्लेदस्त्वधितिष्ठति
देहोष्मणा विपक्को यः सा कलेत्यभिधीयते
कलाः सप्ताशयाःसप्त धातवः सप्त तन्मलाः ॥१॥

सप्तोपधातवः सप्त त्वचः सप्त प्रकीर्त्तिताः ।
त्रयो दोषा नवशतं स्नायूनां सन्धयस्तथा ।
दशाऽधिकञ्च द्विशतमस्थ्नाञ्च द्विशतं मतम् ॥२॥
सप्तोत्तरं मर्मशतं शिराः सप्तशतन्तथा ।
चतुर्विंशतिराख्याता धमन्योरसवाहिकाः ।
मांसपेश्यःसमाख्याता नृणां पञ्चशतं बुधैः ॥३॥
स्त्रीणाञ्च विंशत्यधिका कण्डरा श्चैव षोडश ।
नृदेहे दश रन्ध्राणि नारीदेहे त्रयोदश ।
एतत्समासतः प्रोक्तं विस्तरेणाधुनोच्यते ॥४॥
मांसासृग्मेदसां तिस्रो यकृत्प्लीह्नोश्चतुर्थिका ।
पञ्चमीच तथान्त्राणां षष्ठी चाग्निधरा मता ।
रेतोधरा सप्तमी स्यादितिसप्तकला मताः ॥५॥
श्लेष्माशयःस्यादुरसि तस्मादामाशयस्त्वधः ।
ऊर्द्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः ॥६॥
तस्योपरि तिलं ज्ञेयं तदधःपवनाशयः ।
मलाशयस्त्वध स्तस्माद् वस्तिर्मूत्राशय स्त्वधः ॥७॥
जीवरक्ताशयमुरो ज्ञेयाःसप्ताशयास्त्वमी ।
पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः ।
धरागर्भाशयःप्रोक्तः स्तनौ स्तन्याशयौ मतौ ॥८॥
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
जायन्तेऽन्योऽन्यतः सर्वे पाचिताः पित्ततेजसा ॥९॥
जिह्वानेत्रकपोलानां जलं पित्तञ्च रञ्जकम् ।
कर्णविड्रसनादन्तकक्षामेढ्रादिजं मलम् ॥१०॥

नखनेत्रमलं वक्त्रे स्निग्धत्वं पिण्डकास्तथा ।
जायन्ते सप्तधातूनां मलान्येवमनुक्रमात् ॥ ११ ॥
कफपित्तामलश्चैव प्रस्वेदो नखरोम च ।
स्नेहाक्षित्वग्वसामोजोधातूनां क्रमशो मलाः ।
रसाद्रक्तं ततो मांसं मांसान्मेदःप्रजायते ॥ १२ ॥
मेदसोऽस्थि तथा मज्जा मज्जातः शुक्रस्य सम्भवः ।
स्तन्यं रजश्च नारीणां काले भवति गच्छति ।
शुक्रमांसभवः स्नेहो यः सा सङ्कीर्त्यते वसा ॥१३ ॥
स्वेदो दन्तास्तथा केशास्तथैवौजश्च सप्तमम् ।
ओजःसर्वशरीरस्थं शीतं स्निग्धं स्थिरं मतम् ।
सोमात्मकं शरीरस्य बलपुष्टिकरं मतम् ॥ १४ ॥
इति धातुभवा ज्ञेया एते सप्तोपधातवः ।
ज्ञेयावभासिनी पूर्व्वा सिध्मस्थानञ्च सा मता ।
द्वितीया लोहिता ज्ञेया तिलकालकजन्मभूः ॥१५॥
श्वेता तृतीया संख्याता स्थानं चर्मदलस्य सा ।
ताम्रा चतुर्थी विज्ञेया किलासश्वित्रभूमिका ॥१६॥
पञ्चमी वेदनी ख्याता सर्वकुष्ठोद्भवस्ततः ।
विख्याता लोहिता षष्ठी ग्रन्थिगण्डापचीस्थितिः ॥१७॥
स्थूला त्वक् सप्तमी ख्याता विद्रध्यादेःस्थितिश्च सा ।
इति सप्त त्वचः प्रोक्ताः स्थूला व्रीहि द्विमात्रया ॥१८॥
वायुःपित्तं कफो दोषा धातवश्च मलास्तथा ।
तत्रापि पञ्चधा ख्याताः प्रत्येकं देहधारणात् ॥१९॥
पवनस्तेषु बलवान्विभागीकरणान्मतः ।

रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः ।
शरीरदूषणाद्दोषा धातवो देहधारणात् ॥२०॥
वातपित्तकफा ज्ञेयाः मलिनीकरणान्मलाः ।
पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः ।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ॥ २१ ॥
मलाशये चरेत् कोष्ठे वह्निस्थाने तथा हृदि ।
कण्ठे सर्व्वाङ्गदेशेषु वायुः पञ्चप्रकारतः ।
अपानः स्यात्समानश्च प्राणोदानौ तथैव च । ॥ २२ ॥
व्यानश्चेति समीरस्य नामान्युक्तान्यनुक्रमात् ।
हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ २३ ॥
पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम् ।
कटुतिक्तरसं ज्ञेयं विदग्धं चाम्लतां व्रजेत् ।
अग्न्याशये भवेत्पित्तमग्निरूपं तिलोन्मितम् ॥ २४ ॥
त्वचि कान्तिकरं ज्ञेयं लेपाभ्यङ्गादि पाचकम् ।
दृश्यं यकृति यत्पित्तं तद्रसं शोणतां नयेत् ।
यत्पित्तं नेत्रयुगले रूपदर्शनकारि तत् ॥ २५ ॥
यत्पित्तं हृदये तिष्ठन्मेधाप्रज्ञाकरञ्च तत् ।
पाचकः भ्राजकश्चैव रञ्जकालोचके तथा ।
साधकश्चैव पञ्चैव पित्तनामान्यनुक्रमात् ॥ २६ ॥
कफः स्निग्धो गुरुः श्वेतः पिच्छलः शीतलस्तथा ।
तमोगुणाधिकः स्वादुर्विदग्धो लवणो भवेत् ॥ २७ ॥
कफश्चामाशये मूर्ध्नि कण्ठे हृदि च सन्धिषु ।

तिष्ठन् करोति देहस्य स्थैर्य्यं सर्व्वाङ्गपाटवम् ॥२८॥
क्लेदनः स्नेहनश्चैव रसनश्चाप्यलम्बनः ।
श्लेष्मणश्चेति नामानि कफस्योक्तान्यनुक्रमात् ॥२९॥
स्नायवो बन्धनं प्रोक्ता देहे मांसास्थिमेदसाम् ।
सन्धयश्चाङ्गसन्धानात् देहे प्रोक्ताः कफान्विताः ।
आधारश्च तथासारः कायेऽस्थीनि बुधा विदुः ॥३०॥
मर्म्माणि जीवाधाराणि प्रायेण मुनयो जगुः ।
सन्धिबन्धनकारिण्यो दोषधातुवहाः शिराः ॥३१॥
धमन्यो रसवाहिन्यो धमन्ति पवनं तनौ ।
मांसपेश्यो बलायस्युरवष्टम्भाय देहिनाम् ॥३२॥
प्रसारणाकुञ्चनयोरङ्गानाङ्कण्डरा मताः ।
नासानयनकर्णानां द्वे द्वे रन्ध्रे प्रकीर्त्तिते ॥ ३३ ॥
मेहनापानवक्त्राणामेकैकं रन्ध्रमुच्यते ।
दशमं मस्तके प्रोक्तं रन्ध्राणीति नृणां विदुः ॥ ३४ ॥
स्त्रीणान्त्रीण्यधिकानि स्युः स्तनयोर्गर्भवर्त्मनः ।
सूक्ष्मछिद्राणि चान्यानि मतानि त्वचि जन्मिनाम् ॥ ३५ ॥
तद्वामे फुस्फुसप्लीहौ दक्षिणाङ्गे यकृन्मतम् ।
उदानवायोराधारः फुफ्फुसः प्रोच्यते बुधैः ॥
रक्तवाहि शिरामूलं प्लीहा ख्याता महर्षिभिः ।
यकृद्रञ्जकपित्तस्य स्थानं रक्तस्य संश्रयः ॥ ३७ ॥
जलावाहि शिरामूलं तृष्णाच्छादनकं तिलम् ।
वृक्कौ पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः ॥ ३८ ॥
वीर्य्यवाहिशिराधारौ वृषणौ पौरुषावहौ ।

गर्भाधानकरौ लिङ्गमयनं वीर्य्यमूत्रयोः ॥ ३८ ॥
हृदयं चेतनास्थानमोजसश्चाश्रयं मतम् ।
शिराधमन्यो नाभिस्थाः सर्वं व्याप्य स्थितास्तनुम् ।
पुष्णन्ति चानिशं वायोः संयोगात्सर्वधातुभिः ॥ ४० ॥
नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम् ।
कण्ठाद्बहिर्विनिर्याति पातुं विष्णुपदामृतम् ॥ ४१ ॥
पीत्वा चाम्बरपीयूषं पुनरायाति वेगतः ।
प्रीणयन्देहमखिलं जीवयन् जठरानलम् ॥ ४२ ॥
शरीरप्राणयोरेवं संयोगादायुरुच्यते ।
कालेन तद्वियोगाच्च पञ्चत्वं कथ्यते बुधैः ॥ ४३ ॥
न जन्तुः कश्चिदमरः पृथिव्यां जायते क्वचित् ।
अतो मृत्युरवार्य्यः स्यात् किन्तु रोगान्निवारयेत् ॥ ४४ ॥
याप्यत्वं याति साध्यस्तु याप्यो गच्छत्यसाध्यताम् ।
जीवितं हन्त्यसाध्यस्तु नरस्याऽप्रतिकारिणः ॥ ४५ ॥
अतो रुग्भ्यस्तनुं रक्षेन्नरः कर्मविपाकवित् ।
धर्मार्थकाममोक्षाणां शरीरं साधनं यतः ॥ ४६ ॥
धातवस्तन्मलादोषा नाशयन्त्यसमास्तनुम् ।
समाः सुखाय विज्ञेयाः वलायोपचयाय च ॥ ४७ ॥

इति कलादिकथनम् ।

जगद्योनेरनिच्छस्य चिदानन्दैकरूपिणः ।
पुंसोऽस्ति प्रकृतिर्नित्या प्रतिच्छायेव भास्वतः ॥ ४८ ॥
अचेतनापि चैतन्ययोगेन परमात्मनः ।
अकरोद्विश्वमखिलमनित्यं नाटकाकृतिम् ॥ ४९ ॥

प्रकृतिर्विश्वजननी पूर्व्वं बुद्धिमजीजनत् ।
इच्छामयी महद्रूपा अहङ्कारस्ततोऽभवत् ।
त्रिविधः सोऽपि सञ्जातो रजःसत्त्वतमोगुणैः॥ ५० ॥
तस्मात्सत्त्वरजोयुक्ता दिन्द्रियाणि दशाभवत् ।
मनश्च जातं तान्याहुः श्रोत्रत्वक् नयनन्तथा ॥५१ ॥
जिह्वा-घ्राण-वचो-हस्तपादोपस्थ गुदानि च ।
पञ्चबुद्धीन्द्रियाण्याहुः प्राज्ञमानीतराणि च ।
कर्मेन्द्रियाणि पञ्चैव कथ्यन्ते सूक्ष्म-बुद्धिभिः ॥ ५२ ॥
तमः सत्त्वगुणोत्कृष्टादहङ्काराद्यथाभवत् ।
तन्मात्रपञ्चकं तस्य नामान्युक्तानि सूरिभिः ॥ ५३ ॥
शब्दतन्मात्रकं स्पर्श-तन्मात्रं रूपमात्रकम् ।
रसतन्मात्रकं गन्धतन्मात्रञ्चेति तद्विदुः ॥ ५४ ॥
तन्मात्र पञ्चकं तस्मात्सञ्जातं भूतपञ्चकम् ।
व्योमानिलानलजल क्षौणीरूपञ्च तन्मतम् ॥ ५५ ॥
शब्दः स्पर्शश्च रूपञ्च रसगन्धावनुक्रमात् ।
तन्मात्राणां विशेषाःस्युः स्थूलभावमुपागताः ॥ ५६ ॥
बुद्धीन्द्रियाणां पञ्चैव शब्दाद्या विषया मताः ।
कर्मेन्द्रियाणां विषया भाषादानविहारिताः ॥ ५७ ॥
आनन्दोत्सर्गकौ चैव कथितास्तत्त्वदर्शिभिः ।
प्रधानं प्रकृतिः शक्ति र्नित्याचाविकृतिस्तथा ।
एतानि तस्य नामानि शिवमाश्रित्य या स्थिता ॥ ५८ ॥
महानहङ्कृतिः पञ्च तन्मात्राणि पृथक् पृथक् ।
प्रकृतिर्विकृतिश्चैव सप्तैतानि बुधा जगुः ॥ ५९ ॥

दशेन्द्रियाणि चित्तञ्च महाभूतानि पञ्च च ।
विकाराः षोड़श ज्ञेयाः सर्व्वं व्याप्य जगत् स्थिताः ॥ ६० ॥
एवं चतुर्विंशतिभिस्तत्त्वैः सिद्धे वपुर्गृहे ।
जीवात्मा नियतो नित्यो वसति स्वात्मदूतवान् ॥ ६१ ॥
स देही कथ्यते पाप-पुण्य-दुःखसुखादिभिः ।
व्याप्तो वद्धश्च मनसा छन्निमैः कर्मबन्धनैः ॥ ६२ ॥
कामक्रोधौ लोभमोहावहङ्कारश्च पञ्चमः ।
दशेन्द्रियाणि बुद्धिश्च तस्य बन्धाय देहिनः ।
आप्नोति बन्धमज्ञानादात्मज्ञानाच्च मुच्यते॥६३ ॥ सृष्टिक्रमः ।



अथ षष्ठोऽध्यायः ।

यात्यामाशयमाहारः पूर्व्वं प्राणानिलेरितः ।
माधुर्य्यं फेनभावञ्च षड्रसोऽपि लभेत सः ॥ १ ॥
अथ पाचकपित्तेन विदग्धश्चाम्लतां व्रजेत् ।
ततः समान मरुता ग्रहणी मभिनीयते ॥ २ ॥
ग्रहिण्यां पाचितः कोष्ठे वह्निना जायते कटुः ।
रसो भवति सम्पक्वादपक्वादामसम्भवः ।
वह्नेर्बलेन माधुर्य्यं स्निग्धतां याति तद्रसः ॥ ३ ॥
पुष्टौ पित्तधरा नाम सा कला परिकीर्त्तिता।
पक्वामाशयमध्यस्था ग्रहणीत्यभिधीयते ।
पुष्णाति धातूनखिलान् सम्यक् पक्वो मृतोपमः ॥ ४ ॥
मन्दवह्निविदग्धश्च कटर्वाम्लो भवेद्रसः ।

विषभावं व्रजेद्वापि कुर्य्याद्वा रोगसङ्करम् ॥ ५ ॥
आहारस्य रसः सारः सारहीनो मलद्रवः ।
शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात् ॥
तत्किट्टञ्च मलं ज्ञेयं तिष्ठेत्पक्वाशये च तत् ॥ ६ ॥
वलित्रितय-मार्गेण यात्यपानेन नोदितम् ।
प्रवाहिणी सर्जनीच ग्राहिकेति वलित्रयम् ॥ ७ ॥
रसस्तु हृदयं याति समान-मरुतेरितः ।
रञ्जितः पाचितस्तत्र पित्तेनायाति रक्तताम् ॥ ८ ॥
रक्तं सर्व्वशरीरस्थं जीवस्याधारमुत्तमम् ।
स्निग्धं गुरुतरं स्वादुविदग्धं पित्तवद्भवेत् ॥ ९ ॥
पाचिताः पित्ततापेन रसाद्या धातवः क्रमात् ।
शुक्रत्वं यान्ति मासेन तथा स्त्रीणां रजोभवेत् ॥१०॥
कामान्मिथुनसंयोगे शुद्धशोणित-शुक्रजः ।
गर्भः संजायते नार्य्याः संजातो बाल उच्यते ॥११ ॥
आधिक्ये रजसः कन्या पुत्रः शुक्राधिके भवेत् ।
नपुंसकं समत्वेन यथेच्छा पारमेश्वरी ॥ १२ ॥
अस्थीनि मज्जा शुक्रञ्च पितुरंशास्त्रयोमताः ।
शुक्राश्रितो भवेत् श्यावो गौरश्च रजसाश्रितः ।
बालस्य प्रथमे मासि देया भेषजरक्तिका ॥ १३ ॥
अवलेही कृतैकैव चीरचौद्रसिताघृतैः ।
वर्द्धयेत्तावदेकैकां यावद्भवति वत्सरः ।
माषैर्वृद्धिस्तदूर्द्ध्वं स्याद्यावत् षोड़श वत्सरः ॥ १४ ॥
ततः स्थिराभवेत्तावद्यावद्वर्षाणि सप्ततिः ।

ततोबालकवन्माचा ह्रासनीया शनैः शनैः ।
मात्रेयं कल्कचूर्णानां कषायाणां चतुर्गुणा: ॥ १५ ॥
अञ्जनञ्च तथा लेपः स्नानमभ्यङ्गकर्म च ।
वमनं प्रतिमर्शश्च जन्मप्रभृति शस्यते ॥ १६ ॥
कवलः पञ्चमाद्वर्षादष्टमान्नस्य-कर्मच ।
विरेकः षोड़शाद्वर्षाद्विंशतेश्चैव मैथुनम् ॥ १७ ॥
बाल्यं वृद्धिश्छविर्मेधात्वग्दृष्टिः शुक्रविक्रमौ ।
बुद्धिः कर्मेन्द्रियञ्चेति जीवितं दशतो ह्रसेत् ॥ १८ ॥
इति आहार पाकगर्भोत्पत्ति कुमारपोषणानि ॥
अल्पकेशः कृशोरूक्षो वाचालश्चलमानसः ।
आकाशचारी स्वप्नेषु वातप्रकृतिको नरः ।
अकाले पलितैर्व्याप्तो धीमान् स्वेदीच रोषणः ॥१९ ॥
स्वप्नेषु ज्योतिषां द्रष्टा पित्त-प्रकृतिको नरः ।
गम्भीरबुद्धिः स्थूलाङ्गः स्निग्धकेशो महाबलः ॥ २० ॥
स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिको नरः ।
ज्ञातव्या मिश्रचिह्नैश्च द्वित्रिदोषोल्वणा नराः ॥ २१ ॥
कौमारं यौवनं वार्द्धं प्राणिनां त्रिविधं वयः ।
कफपित्तानिलप्रायं क्रमतः प्रकृतिस्त्रिधा ॥ २२ ॥
आषोड़शाद्भवेद्बालो वर्षात् चीरान्नवर्द्धितः
मध्यमं सप्ततिर्यावत्तदूर्द्ध्वं वृद्ध उच्यते । इति हितोपदेशात् ॥
तमः कफाभ्यां निद्रा स्यान्मूर्च्छा पित्ततमोभवा ॥
रजः पित्तानिलैर्भ्रान्तिस्तन्द्रा श्लेष्मतमोऽनिलैः ॥ २३ ॥
ग्लानिरोजः क्षयाद् दुःखादजीर्णाच्च श्रमाद्भवेत् ।

यः सामर्थ्येऽप्यनुत्साहस्तदालस्यमुदीर्य्यते ॥ २४ ॥
चैतन्यशिथिलत्वाद्यःपीत्वैकं श्वासमुद्गिरेत् ।
विदीर्णवदनः श्वासं जृम्भा सा कथ्यते बुधैः ॥ २५ ॥
उदानप्राणयोरूर्द्ध्वयोगान्मौलिकफस्रवात् ।
शब्दः सञ्जायते नस्तः क्षुतं तत्कथ्यते बुधैः ॥ २६ ॥
उदान-कोपादाहारःसुस्थिरत्वाच्च यद्भवेत् ।
पवनस्योर्द्ध्वगमनं तमुद्गारं प्रचक्षते ॥२७॥ प्रकृति लक्षणानि ।

---

अथ सप्तमोऽध्यायः ।

रोगाणां गणना पूर्व्वं मुनिभि र्या प्रकीर्त्तिता ।
मयात्र प्रोच्यते सैव तद्भेदा बहवो मताः ॥ १ ॥
पञ्च विंशतिरुद्दिष्टाज्वरास्तद्भेद उच्यते ।
पृथग्दोषैस्त्रियो द्वन्द्वभेदेन त्रिविधः स्मृतः ॥ २ ॥
एकश्च सन्निपातेन तद्भेदा बहवः स्मृताः ।
प्रायशः सन्निपातेन पञ्च स्यु र्विषम ज्वराः ॥ ३ ॥
सन्ततः सततश्चैव अन्येद्युष्कस्तृतीयकः ।
चातुर्थकश्च पञ्चैते कीर्त्तिता विषमज्वराः ॥ ४ ॥
तथा गन्तुज्वरोऽप्येकस्त्रयोदशविधो मतः ।
अभिचारग्रहावेशशापैरागन्तुकस्त्रिधा ॥ ५ ॥
श्रमाच्छेदात् क्षताद्दाहाच्चतुर्धा घातजोज्वरः ।
कामाद्भीतेः शुचोरोषाद्विषादौषधगन्धतः ।
अभिषङ्गज्वराः षट्स्यु रेवं ज्वर विनिश्चयः ॥ ६ ॥
पृथक् दोषैःसमस्तैश्च शोकादामाद्भयादपि ।

अतीसारः सप्तधा स्याद् ग्रहणी पञ्चधा मता ॥ ७ ॥
पृथग्दोषैः सन्निपातात्तथामेनच पञ्चमी ।
प्रवाहिका चतुर्द्धा स्यात् पृथग्दोषैस्तथा स्रजः ॥ ८ ॥
अजीर्णं त्रिविधं प्रोक्तं विष्टब्धं वायुना मतम् ।
पित्ताद्विदग्धं विज्ञेयं कफेनामं तदुच्यते ॥ ९ ॥
विषाजीर्णं रसादेकं दोषैः स्यादलसस्त्रिधा ।
विसूची त्रिविधा प्रोक्ता दोषैः सा स्यात् पृथक् पृथक् ।
दण्डकालसकश्चैव एकैकं स्याद्विलम्बिका ॥ १० ॥
अर्शांसि षड्विधान्याहु र्वात-पित्त-कफ स्रतः ।
सन्निपाताच्च संसर्गात्तेषां भेदो द्विधा स्मृतः ॥ ११ ॥
सहजोत्तर-जन्माभ्यां तथा शुष्कार्द्रभेदतः ।
त्रिजेर चर्म-कीलानि वातात्पित्तात् कफादपि ॥ १२ ॥
द्वाविंशति प्रकारेण कृमयः स्युर्द्विधा च ते ।
बाह्यास्तथाभ्यन्तराः स्युस्तेषु यूका बहिश्चराः ॥ १३ ॥
लिक्षाश्चान्येऽभ्यन्तराः स्युः कफात्ते हृदयादिकाः ।
अन्त्रादा उदरा चेष्टा गुरवश्च महाङ्कुराः ॥ १४ ॥
सुगन्धा दर्भ-कुसुमा स्तथा रक्ताश्च मातरः ।
सौरसा लोम-विध्वंसा रोम-द्वीपा उदुम्बराः ॥ १५ ॥
केशादाश्च तथैवान्ये शक्रज्जाताम-केरुकाः ।
लेलिहाश्च सशूलाश्च सौसुरादाश्च केरुकाः ।
तथान्ये कफ-रक्ताभ्यां सञ्जाताः स्नायुकाः स्मृताः ॥ १६ ॥
अथस्य क्रमयश्चान्ये विषमा वाह्ययोमयः ।
पाण्डुरोगाश्च पञ्च स्यु र्वात-पित्त-कफैस्त्रिधा ।

त्रि-दोषैर्मृत्तिकाभिश्च तथैका कामला स्मृता ॥१७॥
स्यात् कुम्भ-कामला चैका तथैकाश्च हलीमकम् ।
रक्त-पित्तं त्रिधा प्रोक्तमूर्द्धगं कफ-सम्भवम् ।
अधोगं मारुतं ज्ञेयं तद्द्वयेन द्वि-मार्गगम् ॥ १८ ॥
कासाः पञ्च समुद्दिष्टास्ते त्रयःस्यु स्त्रिभिर्मलैः ।
उरःक्षताच्चतुर्थः स्यात् क्षयाद्धातोश्च पञ्चमः ॥ १९ ।
क्षयाः पञ्चैव विज्ञेया स्त्रिभिर्दोषैस्त्रयश्च ते ।
चतुर्थः सन्निपातेन पञ्चमः स्यादुरःक्षतात् ॥ २० ॥
शोषाःस्युःषट्प्रकारेण स्त्री-प्रसङ्गाच्छुचो व्रणात् ।
अध्व-श्रमाच्च व्यायामाद्वार्द्धक्यादपि जायते ॥ २१ ॥
श्वासाश्च पञ्च विज्ञेयाः क्षुद्रः स्यात्तमकस्तथा ।
ऊर्द्ध-श्वासो महाश्वासश्छिन्नश्वासश्च पञ्चमः ॥ २२ ॥
कथिताः पञ्च हिक्कास्तु तासु क्षुद्रान्नजा तथा ।
गम्भीरा यमला चैव महती पञ्चमी तथा ॥ २३ ॥
चत्वारोऽग्नेर्विकाराः स्युर्विषमो वात-सम्भवः ।
तीक्ष्णः पित्तात्कफान्मन्दो भस्मको वात-पित्ततः ॥ २४ ॥
पञ्चैवारोचकाः ज्ञेया वात-पित्त-कफैस्त्रिधा ।
सन्निपातान्मनस्तापाच्छर्द्दयः सप्तधा मताः ॥ २५ ॥
त्रिभिर्दोषैः पृथक् तिस्रः कृमिभिः सन्निपाततः ।
घृणायाश्च तथा स्त्रीणां गर्भाधानाच्च जायते ॥ २६ ॥
स्वर-भेदाः षडेवस्युर्वात-पित्त-कफैस्त्रयः ।
मेदसा-सन्निपातेन क्षयात् षष्ठः प्रकीर्त्तितः ॥ २७ ॥
तृष्णाच षड्विधा प्रोक्ता वातात्पित्तात् कफादपि ।

त्रि-दोषैरुपसर्गैश्च क्षयाद्वातोश्च षष्टिका ॥ २८ ॥
मूर्च्छा चतुर्विधा ज्ञेया वात-पित्त-कफैः पृथक् ।
चतुर्थी सन्निपातेन तथैकश्च भ्रमः स्मृतः ॥
निद्रा तन्द्राच सन्न्यासो ग्लानिश्चैकैकशः स्मृतः ॥ २९ ॥
मदाः सप्त समाख्याता वात-पित्त-कफैस्त्रयः ।
त्रि-दोषैरस्रजा मद्याद्विषादपि च सप्तमः ॥ ३० ॥
मदात्ययश्चतुर्द्धा स्या द्वात-पित्त-कफादपि ।
त्रि-दोषैरपि विज्ञेय एकः परमद स्तथा ॥ ३१ ॥
पानाजीर्णं तथाचैकं तथैकः पान-विभ्रमः ।
पानात्यय स्तथाचैको दाहाः सप्त मतास्तथा ॥ ३२ ॥
रक्त-पित्ता-त्तथारक्तात्तृष्णायाः पित्ततस्तथा ।
धातु-क्षयान्मर्म-घाताद्रक्त-पूर्णोदरादपि ॥ ३३ ॥
उन्मादाः षट् समाख्यातास्त्रिभिर्दोषै स्त्रयश्च ते ।
सन्निपाताद्विषाद्ज्ञेयः षष्ठो दुःखेन चेतसः ॥ ३४ ॥
भूतोन्मादा विंशतिः स्यु स्ते देवाद्दानवादपि ।
गन्धर्वात् किन्नराद्यचात्पितृभ्यो गुरु-शापतः ॥ ३५ ॥
प्रेताच गुह्यकाद्वृद्धात्सिद्धाद्भूतात्पिशाचतः ।
जलाधिदेवतायाश्च नागाच्च ब्रह्मराक्षसात् ॥
राक्षसादपि कुष्माण्डात्तथा वेतालयोरपि ॥ ३६ ॥
अपस्मारश्चतुर्द्धा स्याद्वातमीरात्पित्ततस्तथा ।
श्लेष्मणोऽपि तृतीयः स्याच्चतुर्थः सन्निपाततः ॥ ३७ ॥
चत्वारश्चाम-वाताः स्यु र्वात-पित्त-कफैस्त्रिधा ।
चतुर्थः सन्निपातेन शूलान्यष्टौबुधा जगुः ॥ ३८ ॥

पृथग् दोषैस्त्रिधा द्वन्द्व-भेदेन त्रि-विधान्यपि ।
आमेन सप्तमं प्रोक्तं सन्निपातेन चाष्टमम् ॥ ३८ ॥
परिणाम-भवं शूलमष्टधा परिकीर्त्तितम् ।
मलैर्य्यैः शूल-संख्या स्यात्तैरेव परिणामजम् ।
अन्न-द्रव-भवं शूलं ज्वर-पित्त-भवन्तथा ॥ ४० ॥
एकैकं गणितं सुज्ञैरुदावर्त्तास्त्रयोदश ।
एकः क्षुन्निग्रहात् प्रोक्तस्तृष्णारोधाद् द्वितीयकः ॥ ४१ ॥
निद्रा-घातात् तृतीयः स्याच्चतुर्थःश्वास-निग्रहात् ॥
छर्द्दिरोधात्पञ्चमः स्यात् षष्ठः क्षवथु-निग्रहात् ॥ ४२ ॥
जृम्भा-रोधात्सप्तमः स्यादुद्गार-ग्रहतोऽष्टमः ।
नवमःस्यादश्रु-रोधाद्दशमः शुक्रधारणात् ॥ ४३ ॥
मूत्र-रोधान्मलस्यापि रोधाद्वात-विनिग्रहात् ।
उदावर्त्तास्त्रयश्चैते घोरोपद्रव-कारकाः ॥ ४४ ॥
आनाहो द्विविधो ज्ञेय एकः पक्वाशयोद्भवः ।
आमाशयोद्भवश्चान्यः प्रत्यानाहःस कथ्यते ॥ ४५ ॥
उरोग्रहस्तथाचैको हृद्रोगाः पञ्च कीर्त्तिताः ।
वातादिभिस्त्रयः प्रोक्ताश्चतुर्थः सन्निपाततः ॥ ४६ ॥
पञ्चमः क्रिमि-संजातस्तथाष्टावुदराणि तु ।
वातात्पित्तात् कफात्तोणि त्रि-दोषेभ्यो जलादपि ।
प्लीहात्क्षताद्बद्धगुदादष्टमं परिकीर्त्तितम् ॥ ४७ ॥
गुल्मास्त्वष्टौ समाख्याता वात-पित्त-कफैस्त्रयः ।
द्वन्द्व-भेदास्त्रयःप्रोक्ताः सप्तमः सन्निपाततः ॥ ४८ ॥
रक्तादष्टमकः ख्यातो मूत्र-घातास्त्रयोदश ।

वात-कुण्डलिकापूर्वा वाताष्ठीला ततःपरा ॥ ४९ ॥
वात-वस्तिस्तृतीयः स्यान्मूत्राघात चतुर्थकः ।
पञ्चमं मूत्र-जठरं षष्ठो मूत्र-क्षयः स्मृतः ॥ ५० ॥
मूत्रोत्सर्गः सप्तमः स्यान्मूत्रग्रन्थिस्तथाष्टमः ।
मूत्र-शुक्रन्तु नवमं विड्घातो दशमः स्मृतः ॥ ५१ ॥
मूत्र-साद स्रोष्ण-वातौ वस्ति-कुण्डलिका तथा ।
त्रयोऽप्येते मूत्र-घाताः पृथक् घोराःप्रकीर्त्तिताः ॥ ५२ ॥
मूत्र-कृच्छ्राणि चाष्टौ स्युर्वात-पित्त-कफैस्त्रिधा ।
सन्निपाताच्चतुर्थः स्याच्छुक्र-कृच्छ्रञ्च पञ्चमम् ॥ ५३ ॥
विट्कृच्छ्रं षष्ठमं ख्यातं घातकृच्छ्रञ्च सप्तमम् ।
अष्टमञ्चाश्मरी-कृच्छ्रं चतुर्धा चाश्मरी मता ॥ ५४ ॥
वातात्पित्तात् कफाच्छुक्रात्तथा मेहाश्च विंशतिः ।
इक्षु-मेहः सुरा-मेहः पिष्ट-मेहश्च सान्द्रकः ॥ ५५ ॥
शुक्र-मेहोदकाख्यौ च लाला-मेहश्च शीतकः ।
सिकताख्यःशनैर्मेहो दशैते कफ-सम्भवाः ॥ ५६ ॥
मञ्जिष्ठाख्यो हरिद्राख्यो नील-मेहश्च रक्तकः ।
क्षार-मेहः क्षार-मेहः षडेते पित्त-सम्भवाः ॥ ५७ ॥
हस्ति मेहो वसा-मेहो मज्जमेहो मधु-प्रभः ।
चत्वारोवातजा मेहाइतिमेहाश्च विंशतिः ॥ ५८ ॥
सोम-रोगस्तथाचैकः प्रमेह-पिडिका दश ॥
शराविका कच्छपिका पुत्रिणी विनतालजी ॥ ५९ ॥
मसूरिका सर्षपिका जालिनीच विदारिका ।
विद्रधिश्च दशैताःस्युः पिडिका मेह-सम्भवाः ॥ ६० ॥

मेदो-दोषस्तथाचैको शोफ-दोषा नव स्मृताः ।
दोषैः पृथक् द्वयैः सर्वैरभिघाताद्विषादपि ॥ ६१ ॥
वृद्धयः सप्त गदिता वातात्पित्तात् कफेन च ।
रक्तेन मेदसा मूत्रादन्त्रवृद्धिश्च सप्तमी ॥ ६२ ॥
षण्ड-वृद्धिस्तथा चैका तथैका गण्ड-मालिका ।
गण्डा-लजीति चैका स्याद् ग्रन्थयो नवधा मताः ॥ ६३ ॥
त्रिभिर्दोषैस्त्रयोरक्ताच्छिराभिर्मेदसो व्रणात् ।
षष्ठा मांसेन नवमः षड्विधं स्यात्तथार्व्वुदम् ॥ ६४ ॥
वातात्पित्तात् कफाद्रक्तान्मांसादपि च मेदसः ।
श्लीपदञ्च त्रिधा प्रोक्तं वातात्पित्तात् कफादपि ॥ ६५ ॥
विद्रधिः षड्विधःख्यातो वात-पित्त-कफैस्त्रयः ।
रक्तात् चतात्त्रिदोषैश्च व्रणाःपञ्चदशोदिताः ॥ ६६ ॥
तेषां चतुर्भो भेदाः स्युरागन्तुर्देहजस्तथा ।
शुद्धो दुष्टश्च विज्ञेयस्तत्संख्या-कथ्यते पृथक् ।
वात-व्रणः पित्तजश्च कफजो रक्तजो व्रणः ॥ ६७ ॥
वात-पित्त-भवश्चान्यो वात-श्लेष्म-भवस्तथा ।
तथा पित्त-कफाभ्याञ्च सन्निपातेन चाष्टमः ।
नवमो वात-रक्तेन दशमो रक्त-पित्ततः ॥ ६८ ॥
श्लेष्म-रक्त-भवश्चान्यो वात-पित्तासृगुद्भवः ।
वात-श्लेष्मासृगुत्पन्नः पित्त-श्लेष्मास्र-सम्भवः ।
सन्निपातासृगुद्भूत इति पञ्चदश व्रणाः ॥ ६९ ॥
सद्यो-व्रणस्त्वष्टधा स्याद्घृष्ट-च्छिन्न-विलम्बिनो ।
छिन्न-भिन्न-प्रचलिताःपृष्ट-विद्ध-निपातिताः ॥ ७० ॥

कोष्ठ-भेदो द्विधा प्रोक्तः च्छिन्नान्त्रो निस्सृतान्त्रकः ।
अस्थि-भङ्गोऽष्टधा प्रोक्तो भग्न-पिष्ट-विदारिताः ।
विवर्त्तितश्च विश्लिष्टस्तिर्य्यक्‌छिन्नमधो-गतः ॥ ७१ ॥
ऊर्द्ध्वगः सन्धि-भग्नश्च वह्नि-दग्धश्चतुर्विधः ।
प्लुष्टोऽतिदग्धो दुर्द्दग्धः सम्यग्दग्धः प्रकीर्त्तितः ॥ ७२ ॥
नाड्यः पञ्च समाख्याता वात-पित्त-कफैस्त्रिधा ।
त्रि-दोषैरपि शल्येन तथाष्टौ स्युर्भगन्दराः ॥ ७३ ॥
शत-पोनस्तु पवनादुष्ट्रग्रीवश्च पित्ततः ।
परिस्रावी-कफाज्ज्ञेयः ऋजुर्वात-कफोद्भवः ॥ ७४ ॥
परिक्षेपी मरुत्पित्तादर्शोजः कफ-पित्ततः ।
आगन्तु-जातश्चोन्मार्गी शम्बूकावर्त्त-स्त्रिदोषजः ॥ ७५ ॥
मेढ्रे पञ्चोपदंशास्तु वात-पित्त-कफैस्त्रिधा ।
सन्निपाताच्च रक्ताच्च मेढ्रे शूकामयास्तथा ॥ ७६ ॥
चतुर्विंशतिराख्याता लिङ्गार्शोग्रन्थितस्तथा ।
निवृत्तमवमन्थश्च मृदितं शत-पोनकः ॥ ७७ ॥
अष्ठीलिका सर्षपिका त्वक्‌पाकश्चावपाटिका ।
मांस-पाकः स्पर्श-हानिर्विरुद्ध-मधिरुद्भवः ॥ ७८ ॥
मांसार्व्वुदं पुष्करिका संव्यूढ-पिडिकालजी ।
रक्तार्व्वुदं विद्रधिश्च कुम्भीका तिलकालकः ।
निरुद्ध-प्रकाशः प्रोक्तस्तथैव परिवर्त्तिका ॥ ७९ ॥
कुष्ठान्यष्टादशोक्तानि वातात्कापालिकं भवेत् ।
पित्तेनोदुम्बरं प्रोक्तं कफान्मण्डल-चर्च्चिके ॥ ८० ॥
मरुत्पित्तादृष्यजिह्वं श्लेषवाताद्विपादिका ।

तथा सिध्मैककुष्ठञ्च किटिभञ्चालसन्तथा ॥ ८१ ॥
कफ-पित्तात् पुनर्दद्रु:पामा-विस्फोटकास्तथा ।
महाकुष्ठं चर्म्म-दलं पुण्डरीकः शतारुकः ॥ ८२ ॥
त्रि-दोषैः काकणं ज्ञेयं तथाख्यं श्वित्रसंज्ञिकम् ।
तच्च वातेन पित्तेन श्लेष्मणा च त्रिधा भवेत् ॥ ८३ ॥
क्षुद्र-रोगाः षष्टि संख्यास्तेष्वाद्यो शर्करार्बुदम् ।
इन्द्र-वृद्धा पनसिका विवृताऽन्धालजी तथा ॥ ८४ ॥
वाराहदंष्ट्रो वल्मीकं कच्छपी तिलकालकः ।
गर्दभो रकसा चैव यव-प्रख्या विदारिका ॥ ८५ ॥
कदरं मसकश्चैव नीलिका जाल-गर्दभः ।
इरिवेल्ली जतु-मणिर्गुदभ्रंशोऽग्नि-रोहिणी ॥ ८६ ॥
सन्निरुद्ध-गुदः कोष्ठः कुनखोऽनुशयी तथा ।
पद्मिनी कण्टकश्चिप्पमलसो मुख-दूषिका ॥ ८७ ॥
कक्षा वृषणकच्छुश्च मन्थःपाषाण-गर्दभः ।
राजिका च तथा व्यङ्गश्चतुर्धा परिकीर्त्तिताः ॥ ८८ ॥
वातात्पित्तात् कफाद्रक्तादित्युक्तं व्यङ्ग-लक्षणम् ।
विस्फोटाः क्षुद्ररोगेषु तेऽष्टधा परिकीर्त्तिताः ॥ ८९ ॥
पृथग्दोषैस्त्रयो द्वन्द्वैस्त्रिविधाः सप्तमोऽस्रजः ।
अष्टमः सन्निपातेन क्षुद्र-रुग्मसूरिका ॥ ९० ॥
चतुर्दश-प्रकारेण त्रिभिर्दोषैस्त्रिधा च सा ।
द्वन्द्वजा त्रिविधा प्रोक्ताः सन्निपातेन सप्तमी ॥ ९१ ॥
अष्टमीत्वग्गता ज्ञेया नवमी रक्तजा मता ।
दशमी मांससञ्जाता यतश्चोऽन्याश्च दुस्तराः ॥

मेदो-स्थि-मज्जा-शुक्रस्था कुष्ठ-रोगा इतीरिताः ॥ ९२ ॥
विसर्प-रोगा नवधा वात-पित्त-कफैस्त्रिधा ।
त्रिधाच द्वन्द्व-भेदेन सन्निपातेन सप्तमः ।
अष्टमो वह्नि-दाहेन नवमश्चाभि-घातजः ॥ ९३ ॥
तथैकः श्लेष्म-पित्ताभ्या मुदर्दः परिकीर्त्तितः ।
वात-पित्तेन चैकस्तु शीत-पित्तामयः स्मृतः ॥ ९४ ॥
अम्ल-पित्तं त्रिधा प्रोक्तं वातेन श्लेष्मणा तथा ।
तृतीयं श्लेष्म-वाताभ्यां वात-रक्तस्तथाष्टधा ॥ ९५ ॥
वाताधिक्येन पित्ताच्च कफाद्दोष-त्रयेण च ।
रक्ताधिक्येन दोषाणां द्वन्द्वेन त्रिविधं मतम् ॥ ९६ ॥
अशीतिर्वातजारोगाः कथ्यन्ते मुनि-भाषिताः ।
आक्षेपको हनु-स्तम्भ ऊरु-स्तम्भः शिरो-ग्रहः ॥ ९७ ॥
बाह्यायामोन्तरायामः पार्श्वशूलं कटि-ग्रहः ।
दण्डापतानकः खल्ली जिह्वास्तम्भस्तथार्द्दितम् ॥ ९८ ॥
पक्षाघातः क्रोष्टु-शीर्षं मन्यास्तम्भश्च पङ्गुता ।
कलाय-खञ्जता तूनी प्रतितूनी च खञ्जता ॥ ९९ ॥
पाद-हर्षो गृध्रसीच विश्वाची चापबाहुकः ।
अपतानो व्रणायामो वात-कण्टोपतन्त्रकः ॥ १०० ॥
अङ्ग-भेदोऽङ्गशोषश्च मिन्मिनत्वञ्च गद्गदः ।
प्रत्यष्ठीलाऽष्ठीलिकाच वामनत्वञ्च कुब्जता ॥ १०१ ॥
अङ्ग-पीडाङ्गशूलञ्च सङ्कोच स्तम्भ-रूक्षता ।
अङ्ग-भङ्गोऽङ्गविभ्रंशो विड्ग्रहो बद्धविट्कता ॥ १०२ ॥
मूकत्वमतिजृम्भा स्यादत्युद्गारोऽन्त्रकूजनम् ।

वात-प्रवृत्तिः स्फुरणं शिराणां पूरणन्तथा ॥ १०३ ॥
कम्पः कार्श्यं श्यावताच प्रलापः चिप्र-मूत्रता ।
निद्रा-नाशः स्वेद-नाशोदुर्ब्बलत्वं बल-चयः ॥ १०४ ॥
अतिप्रवृत्तिः शुक्रस्य कार्श्यं नाशश्च रेतसः ।
अनवस्थित-चित्तत्वं काठिन्यं विरसास्यता ।
कषाय-वक्त्रता-आनं प्रत्याध्मानञ्च शीतता ॥ १०५ ॥
रोम-हर्षश्च भीरुत्वं तोदःकण्डूरसाज्ञता ।
शब्दाज्ञता-प्रसुप्तिश्च गन्धाज्ञत्वं दृशःचयः ॥ १०६ ॥

इति वातज-रोग-गणना ।

अथपित्त-भवा रोगाश्चत्वारिंशदिहोदिताः ।
धूमोद्गारो विदाहः स्यादुष्णाङ्गत्वं मति-भ्रमः ॥ १०७॥
कान्ति-हानिःकण्ठ-शोषो-मुख-शोषो-ऽल्पशुक्रता ॥१०८॥
तिक्तास्यताम्ल-वक्त्रत्वं स्वेदस्रावाङ्ग-पाकता ।
क्लमो हरित-वर्णत्वमतृप्तिःपीत-कायता ॥ १०९॥
रक्तस्रावोऽङ्गदरणं लोह-गन्धास्यता तथा ।
दौर्गन्ध्यं पीत-मूत्रत्वमरतिः पीत-विट्-कता ॥ ११० ॥
पीतावलोकनं पीत-नेत्रता दन्त-पीतता ।
शीतेच्छा पीत-नखता तेजोद्वेषोऽल्पनिद्रता ॥ १११ ॥
कोपश्च गात्रसादश्च भिन्न-विट्-कत्वमन्धता ।
उष्णोच्छ्वासत्वमुष्णत्वं मूत्रस्य च मलस्य च ॥ ११२॥
तमसो दर्शनं पीत-मण्डलानाञ्च दर्शनम् ।
निस्सहत्व च पित्तस्य चत्वारिंशद्रुजःस्मृताः ॥ ११३॥

इति पित्तज-रोग-गणना ।

कफस्य विंशतिःप्रोक्ता रोगा स्तन्द्रातिनिद्रता ।
गौरवं मुख-माधुर्य्यं मुखु-लेपः प्रसेकता ॥ ११३ ॥
श्वेतावलोकनं श्वेतविट्कत्वं श्वेत-मूत्रता ।
श्वेताङ्गवर्णता शैत्यमुष्णेच्छा तिक्तकामिता ॥ ११४ ॥
मलाधिक्यञ्च शुक्रस्य वाहुल्यं वहु-मूत्रता ।
आलस्यं मन्द-बुद्धित्वं तृप्तिर्घुर्घुर-वाक्यता ।
अचैतन्यञ्च गदिता विंशतिः श्लेषजा गदाः ॥ ११५ ॥

इति कफज-रोग-गणना ।

रक्तस्य च दशप्रोक्ताव्याधय स्तेषु गौरवम् ।
रक्त-मण्डलता रक्त-नेत्रत्वं रक्त-मूत्रता ॥ ११६ ॥
रक्त-ष्ठीवनता रक्त-पिटिकानाञ्च दर्शनम् ।
औष्ण्यञ्च पूति-गन्धित्वं पीड़ा-पाकश्च जायते ॥ ११७ ॥
चतुः-सप्तति संख्याता मुख-रोगास्तथोदिताः ।
तेष्वोष्ठ-रोगा गणिता एकादश मिता बुधैः ॥ ११८ ॥
वात-पित्त-कफैस्त्रेधा त्रि-दोषैरसृजा तथा ।
क्षतं मांसार्व्वुद ञ्चैव खण्डोष्ठश्च जलार्व्वुदम् ॥ ११९ ॥
मेदोऽर्व्वुदं चार्व्वुदञ्च रोगा एकादशौष्ठजाः ।
दन्त-रोगा दशाख्याता दालनः क्रमि-दन्तकः ॥ १२० ॥
दन्त-हर्षः करालश्च दन्त-चालश्च शर्कराः ।
अधिदन्तःश्याव-दन्तो दन्त-भेदः कपालिका ॥ १२१ ॥
तथा त्रयोदश मिता दन्त मूलामयाः स्मृताः ।
शीतादोपकुशौ द्वौ तु दन्त-विद्रधिपुप्पटौ ॥ १२२ ॥
अधिमांसो विदर्भश्च महा-सुषिर सौषिरौ ।

सेष्ववेगतय: पञ्च वातात्पित्तात् कफादपि ॥१२३॥
सन्निपातात्गतिश्चान्या रक्त-नाड़ी च पञ्चमी ।
तथा जिह्वामया: षट् स्युर्वात-पित्त-कफैस्त्रिधा ॥ १२४॥
अलसश्च चतुर्थ: स्यादधिजिह्वाच पञ्चमी ।
षष्ठी चैवोपजिह्वा स्यात्तथाष्टौ तालुजा गदा: ॥ १२५ ॥
अर्वुदं तालु-पिड़का कच्छपी-तालुसंहति: ।
गल-शुण्डो तालुशोष: तालुपाकश्च पुप्पुट: ॥ १२६ ॥
गल-रोगा स्तथाख्याता अष्टादश मिता बुधै: ।
वात-रोहिणिका पूर्वं द्वितीया पित्त-रोहिणी ॥ १२७ ॥
कफ-रोहिणिका प्रोक्ता त्रिदोषैरपिरोहिणी ।
मेदो-रोहिणिका वृन्दोगलौघो गल-विद्रधि: ॥ १२८ ॥
स्वरघ्ना तुण्डोकेरीच शतघ्नो तालुकोऽर्वुदम् ।
गिलायुर्बलयाश्चापि वाताद्गण्ड: कफात्तथा ॥ १२९ ॥
मेदो-गण्डस्तथैक: स्यादित्यष्टादश कण्ठजा: ।
मुखान्त: सप्तवा रोगा अष्टौ ख्याता महर्षिभि: ॥ १३० ॥
मुख-पाको भवेद्वातात् पित्तात्तद्वत्कफादपि ।
रक्ताच्च सन्निपाताच्च पूत्यास्योर्द्ध्वगदादपि ।
अर्वुदश्चेति मुखजाश्चतु:सप्तति रामया: ॥ १३१ ॥
कर्ण-रोगा: समाख्याता अष्टादश मिता बुधै: ।
वातापित्तात् कफाद्रक्तात् सन्निपाताच्च विद्रधि: ॥ १३२ ॥
शोथोऽर्वुदं पूति-कर्ण: कर्णार्श: कर्ण-शूलिका ।
वाधिर्य्यं तन्द्रिका कण्ड: शष्कुली क्रमिकर्णक: ॥ १३३ ॥
कर्णनाद: प्रतीनाह इत्यष्टा दश कर्णजा: ।

कर्ण-पाली-समुद्भूता रोगाः सप्त इहोदिताः ॥ १३४ ॥
उत्पातः पालि-शोषश्च विदारी दुःख-वर्द्धनः ।
रिपोटश्च लेही च पिप्पली चेति संस्मृताः ॥१३५॥
ग्रर्ण-मूलामयाः पञ्च वातात्पित्तात्कफादपि ।
सन्निपाताच्च रक्ताच्च तथा नासाभवा गदाः ॥१३६॥
अष्टादशैव संख्याताः प्रतिश्यायस्तु तेष्वपि ।
वातात्पित्तात्कफाद्रक्तात्सन्निपातेन पञ्चमः ॥१३७॥
पीनसः पूत-नासश्च नासार्शश्च भ्रंशथुः ।
नासा-नाहः पूति-रक्तमर्बुदं दुष्ट-पीनसम् ॥१३८॥
नासा-शोषो घ्राण-पाकः पूय-स्रावश्च दीप्तयः ।
तथा दश शिरो-रोगा वातेनार्द्ध-विभेदकः ॥१३९॥
शिरस्तापश्च वातेन पित्त-पीडा तृतीयका ।
चतुर्थी कफजा पीड़ा रक्तजा सन्निपातजा ॥१४०॥
सूर्य्यावर्त्तः शिरः पाकात् क्रिमिभिः शङ्खकेन च ।
तथा कपाल-रोगाः स्युर्नव तेषु-पशीर्षकम् ॥१४१॥
अरूंषिका विद्रधिश्च दारुणं पिडकार्बुदम् ।
इन्द्र लुप्तश्च खलतिः पलित-श्चेति ते नव ॥१४२॥
तथा नेत्र-भवाः ख्याताश्चतुर्नवतिरामयाः ।
तेषु वर्त्म-गदाः प्रोक्ताश्चतुर्विंशति संज्ञिताः ॥१४३॥
कृच्छ्रोन्मील: पक्ष्म-पातः कफोत्क्लिष्टश्च लोहितः ।
ह्यनिमेषः कर्दमश्च रक्तोत्क्लिष्टः कुकूणकम् ॥१४४॥
पक्ष्मार्शः पक्ष्म-रोधश्च पित्तोत्क्लिष्टश्च पोथकी ।
क्लिष्ट-वर्त्मा च बहलःपक्ष्मोत्सङ्गस्तथार्बुदः ॥१४५॥

कुम्भिका सिकता वर्त्म लगणो अगनामिका ।
तथैव श्याव-वर्त्मा च विस-वर्त्मा तथालजी ॥१४६॥
उत्क्लिष्ट-वर्त्मेति गदाः प्रोक्ता वर्त्म-समुद्भवाः ।
नेत्र-सन्धिसमुद्भूता नव रोगाः प्रकीर्त्तिताः ॥१४७॥
जल-स्रावः कफ-स्रावो रक्त-स्रावश्च पर्वणी ।
पूय-स्रावः क्रिमि-ग्रन्थि रुपनाहस्तथालजी ॥१४८॥
पूयालस इति प्रोक्ता रोगा नयन-सन्धिजाः ।
तथा शिरा-गता रोगाः बुधैः प्रोक्तास्त्रयोदश ॥१४९॥
शिरोत्पातः शिराहर्षः शिराजालश्च शुक्तिका ।
शुक्लार्म्माचाधिमांसार्म्मा प्रस्तार्य्यर्म्माच पिष्टकः ॥१५०॥
शिरायाः पिडकश्चैव कफग्रन्थितकोऽर्ज्जुनः ।
स्नाय्वर्म्माचाधिमांसः स्यादिति शुक्ल-गता गदाः ।
तथा कृष्ण-समुद्भूताः पञ्च रोगाःप्रकीर्त्तिताः॥१५१॥
शुद्ध-शुक्रं शिरा-शुक्रं क्षत-शुक्रन्तथाऽक्षिका ।
शिरा-सङ्गश्च सर्व्वेऽपि प्रोक्ताः कृष्ण-गता गदाः ॥१५२॥
काचन्तु षड्विधं ज्ञेयं वातात् पित्तात् कफादपि ।
सन्निपाताच्च रक्ताच्च षष्ठं संसर्ग-सम्भवम् ॥ १५३ ॥
तिमिराणि षडेव स्यु र्वात-पित्त-कफैस्त्रिधा ।
संसर्गेण च रक्तेन षष्ठं स्यात्सन्निपाततः ॥ १५४ ॥
लिङ्ग-नाशः सप्तधा स्याद्वातात्पित्तात् कफेन च ।
त्रिदोषै रुपसर्गेण-रक्तात् संसर्गजस्तथा ॥ १५५ ॥
अष्टधा दृष्टि-रोगाः स्युस्तेषु पित्त-विदग्धकम् ।
अम्ल पित्तं विदग्धञ्च तथैवोष्ण-विदग्धकम् ॥ १५६ ॥

नकुलान्ध्यं धूसरान्ध्यं रात्र्यन्ध्यं ह्रस्व-दृष्टिका ।
गम्भीर-दृष्टिरित्येते रोगा दृष्टि-गताः स्मृताः ॥ १५७ ॥
चत्वारश्चाधिमन्थाः स्यु र्वात-पित्त-कफास्रजः ।
अभिष्यन्दाश्च चत्वारो रक्ता-द्दोषै-स्त्रिभि-स्तथा ॥ १५८ ॥
सर्वाक्षि-रोगाश्चाष्टौ स्यु स्तेषु वात-विपर्य्ययः ।
अल्प-शोफोऽन्यतो वातस्तथा पाकात्ययः स्मृतः ॥ १५९ ॥
शुष्काक्षिपाकश्च तथा शोफोऽस्रोषित एवच ।
हताधिमन्थ इत्येते रोगाः सर्वाक्षि-सम्भवाः ॥ १६० ॥
पुंस्त्व-दोषास्तु पञ्चैव प्रोक्तास्तत्रेर्ष्यकः स्मृतः ।
आसेकश्चैव कुम्भीकः सुगन्धी षण्ड-संज्ञितः ॥ १६१ ॥
शुक्र-दोषास्तथाष्टौ स्यु र्वात-पित्त-कफैन च ।
कुणपं श्लेष्मवाताभ्यां पूयाभ-श्लेष्म-पित्ततः ॥ १६२ ॥
क्षीणञ्च वात-पित्ताभ्यां ग्रन्थिश्च श्लेष्म-रक्ततः ।
मलानां सन्निपाताच्च शुक्र-दोषा इतीरिताः ॥ १६३ ॥
अथ स्त्री-रोग-नामानि प्रोच्यन्ते पूर्व-शास्त्रतः ।
अष्टावार्त्तवदोषाः स्यु र्वात-पित्त-कफैस्त्रिधा ।
पूयाभं कुणपं ग्रन्थिःचोक्षं मलसमन्तथः ॥ १६४ ॥
तथा च रक्त-प्रदरं चतुर्विध-मुदाहृतम् ।
वात-पित्त-कफैस्त्रेधा चतुर्थं सन्निपाततः ॥ १६५ ॥
विंशतिर्योनि-रोगाः स्यु र्वातात्पित्तात् कफादपि ।
सन्निपाताच्च रक्ताच्च लोहितं क्षयतस्तथा ॥ १६६ ॥
शुष्काच वामिनी चैव खण्डितान्तर्मुखी तथा ।
सूची-मुखी विप्लुता च जातघ्नी च परिप्लुता ॥ १६७ ॥

उपप्लुता प्राक्चरणा महा-योनिरुदावृता ।
कर्णिका चातिचरणा योनि-रोगा इतीरिताः ॥ १६८ ॥
चतुर्विधं योनि-कन्दं वात-पित्त-कफैस्त्रिधा ।
चतुर्थं सन्निपातेन तथाष्टौ गर्भजा गदाः ॥ १६९ ॥
उपविष्टक-गर्भः स्यात्तथा नागोदरः स्मृतः ।
मक्कल्लो मूढ-गर्भश्च विष्कम्भो मूढ-गर्भकः ।
जरायु-दोषो गर्भस्य पातश्चाष्टमकः स्मृतः ॥ १७० ॥
पञ्चैव स्तन-रोगाः स्युर्वातात्पित्तात् कफादपि ।
सन्निपातात् क्षताच्चैव तथा स्तन्योद्भवा गदाः ॥ १७१ ॥
बालरोगेषु कथिता स्त्री-दोषाश्च त्रयः स्मृताः ।
अदृष्ट-पुरुषोत्पन्नः सपत्नी-विहितस्तथा ॥१७२॥
दैवाज्जातस्तृतीयस्तु तथा ये सूतिका गदाः ।
ज्वराद्यश्चिकित्स्यास्ते यथादोषं यथाबलम् ॥१७३॥
द्वाविंशतिर्बालरोगास्तेषु क्षीर-भवास्त्रयः ।
वातात्पित्तात्कफाच्चैव दन्तोद्भेदश्चतुर्थकः ।
दन्तघातो दन्त-शब्दः कालदन्तोऽहिपूतनम् ॥१७४॥
मुख-पाको मुख-स्रावो गुदपाकोपशीर्षके ।
पार्श्वारुणस्तालु-कण्ठो विच्छिन्नं परिगर्भिकः ॥१७५॥
दौर्बल्यं गात्र-शोषश्च शय्या-मूत्रं कुकूणकः ।
रोदनञ्चाजगल्ली स्यादिति द्वाविंशतिः स्मृताः ॥१७६॥
तथा बालग्रहाः ख्याता द्वादशैव मुनीश्वरैः ।
स्कन्द-ग्रहो विशाखः स्यात् खग्रहश्च पितृ-ग्रहः ॥१७७॥
नैगमेयग्रहस्तद्वच्छकुनिः शीतपूतना ।

मुख-मण्डितिका तद्वत् पूतना चान्ध-पूतना ।
रेवती चैव संख्याता तथा स्याच्छुष्करेवती ॥१७८॥
तथावरणभेदास्तु वात-रक्तादिकाश्च ये ।
द्वि-चत्वारिंशदुक्तास्ते रोगेष्वेव मुनीश्वरैः ॥१७९॥
द्विषष्टिर्दोषभेदाःस्युः सन्निपातादिका श्च ये ।
तेऽपि रोगेषु गणिताः पृथक्प्रोक्ता न ते क्वचित् ॥१८०॥
हीन-मिथ्याऽतियोगानां भेदैः पञ्चदशोदिताः ।
पञ्च कर्म-भवा रोगास्तेऽपि रोगेषु संश्रिताः ॥१८१॥
स्नेह-स्वेदौ तथा धूमो गण्डूषो जन-तर्पणं ।
अष्टादशैव याः पीडा स्ताश्च रोगेषु लक्षिताः॥१८२॥
शीतोपद्रव एकः स्यादेकश्चोष्णोद्भवो मतः ।
शल्योपद्रव एकश्च घोरश्चैकः स्मृतस्तथा ॥१८३॥
स्थावरं जङ्गमश्चैव कृत्रिमञ्च त्रिधा विषम् ।
तेषाञ्च काल-कुटाद्यैर्नवधा स्थावरं विषम् ।
जङ्गमं बहुधा प्रोक्तं तत्र लूता भुजङ्गमाः ॥१८४॥
वृश्चिका मूषिकाः कीटाः प्रत्येकं ते चतुर्विधाः ।
दंष्ट्रा-विषं नख-विषं बाल-शृङ्गास्थिभि स्तथा ॥१८५॥
मूत्रात्पूरीषाच्छुक्राच्च दृष्टेर्निश्वासतस्तथा ।
लालायाः स्पर्शतस्तद्वत् तथा शङ्का-विषं मतम् ॥१८६॥
कृत्रिमं द्विविधं प्रोक्तं गर-दूषीविभेदतः ।
सप्त धातु-विषं ज्ञेयं तथा सप्तोपधातुजम् ॥१८७॥
तथैवोपविषेभ्यश्च जातं सप्त-विधं मतम् ॥
दुष्ट-नीर-विषञ्चैकं तथैकं दिग्धजं विषम् ॥१८८॥

अपि-कच्छु-भवा कण्डूदुष्ट-नीर-भवा तथा ।
तथा शूरण-कण्डूश्च शोथो भल्लातजस्तथा ।
मदश्चतुर्विधश्चान्यः पूग-भङ्गाचकोद्रवैः ॥१८९॥
चतुर्विधोऽन्यो द्रव्याणां फल-त्वग्मूलपत्रजम् ।
इति प्रसिद्धा गणिता ये विलोपद्रवा भुवि ।
असंख्याश्चापरे धातु-मूल-जीवादिसम्भवाः ॥१९०॥

समाप्तोऽयं पूर्व्व-खण्डः ।



मध्य-खण्डः ।

## प्रथमोऽध्यायः ।

अथातः स्वरसः कल्कः क्वाथश्च हिम-फाण्टकौ ।
ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥१॥
स्वरसकल्पना आहतात्तत्क्षणाकृष्टाद् द्रव्यात् क्षुण्णात्समुद्भवेत्
वस्त्र-निष्पीडितो यः स्यात् स्वरसो रस उच्यते ॥२॥
कुडवं चूर्णितं द्रव्यं क्षिप्तञ्च द्विगुणे जले ।
अहोरात्र स्थितं तस्माद्भवेद्वा रस उत्तमः ॥३॥
आदाय शुष्क द्रव्यं वा स्वरसानामसम्भवे ।
जलेऽष्टगुणिते साध्यं पाद-शिष्टञ्च गृह्यते ॥४॥
स्वरसस्य गुरुत्वाच्च पलमर्द्धं प्रयोजयेत् ।
निशोषितञ्चाग्निसिद्धं पलमात्रं रसं पिवेत् ॥५॥
मधु श्वेता-गुड-क्षारान् जीरकं लवणन्तथा ।

घृतं तैलञ्च चूर्णादीन् कोल-मात्रान् रसे क्षिपेत् ॥६॥
अमृतायाः रसः क्षौद्र-युक्तः सर्व-प्रमेह-जित् ।
हरिद्रा-चूर्ण-युक्तो वा रसोधात्र्याः समाक्षिकः॥७॥
वासकःस्वरसः पेयो मधुना रक्त-पित्त-जित् ।
ज्वर-कास-क्षय-हरः कामला श्लेष्म-पित्तहा ॥८॥
त्रिफलाया रसः क्षौद्र-युक्तो दार्व्वी-रसोऽथवा ।
निम्बस्य वा गुडूच्या वा पीतो जयति कामलाम् ॥९॥
पीतो मरिच-चूर्णेन तुलसी-पत्रजो रसः ।
द्रोण-पुष्पी रसोवापि निहन्ति विषम-ज्वरान् ॥१०॥
जम्ब्वाम्रामलकीनाञ्च पल्लवोत्थो रसो जयेत् ।
मध्वाज्य-क्षीर-संयुक्तो रक्तातीसारमुल्बणम् ॥११॥
स्थूलवच्छूलिका-पत्ररसः पानाद्व्यपोहति ।
सर्व्वातिसारान् श्योनाक-कुटज-त्वग्रसोऽथवा ॥१२॥
आर्द्रक-स्वरसः क्षौद्र-युक्तो वृषण-वात-नुत् ।
श्वास-काशारुची हन्ति प्रतिश्यायं व्यपोहति ॥१३॥
वीज-पूर-रसः पानान्मधु-क्षार-युतो जयेत् ।
पार्श्व-हृदस्ति-शूलानि कोष्ठ-वायुञ्च दारुणम् ॥१४॥
शतावर्य्याश्च मधुना पित्त-शूल-हरो रसः ।
निशा-चूर्ण-युतः कन्या-रसः प्लीहाऽपचीहरः ॥१५॥
अलम्बुषायाः स्वरसः पीतो द्वि-पल-मात्रया ।
अपची-गण्ड-मालानां कामलायाश्च नाशनः ॥१६॥
रसो मुण्ड्याः सकोष्णो वा मरिचैरवधूलितः ।
जयेत्सार्द्धमाभ्यासाकुर्य्यावर्त्तार्द्धभेदकौ ॥१७॥

ब्राह्मी-कुष्माण्ड-षड्ग्रन्थाशङ्खिनी स्वरसाः पृथक्।
मधु-कुष्ठ-युताः पीताः सर्व्वोन्मादापहारिणः ॥१८॥
कुष्माण्डकस्य स्वरसो गुडेन सह योजितः।
दुष्टकोद्रव-सञ्जात मदं पानाद्व्यपोहति ॥१९॥
खड्गादि-च्छिन्न-गात्रस्य तत्कालं पूरितो व्रणः।
गाङ्गेरुकी-मूलरसैर्जायते गत-वेदनः ॥२०॥
अथ पुटपाकः। पुट-पाकस्य कल्कस्य स्वरसो गृह्यते यतः।
अतस्तु पुटपाकानां युक्तिरत्रोच्यते मया ॥२१॥
पुट-पाकस्य मात्रेयं लेपस्याङ्गार-वर्णता।
लेपञ्च द्व्यङ्गुलं स्थूलं कुर्य्याद् द्व्यङ्गुष्ठ-मात्रकम्।
काश्मरी-वट-जम्ब्वादि-पत्रैर्वेष्टनमुत्तमम् ॥२२॥
पल-मात्र-रसो ग्राह्यःकर्ष-मात्रं मधु क्षिपेत्।
कल्क-चूर्ण-द्रवाद्यास्तु देयाः स्वरसवद्बुधैः।
तत्कालाकृष्ट-कुटज-त्वचं तण्डुलवारिणा ॥२३॥
पिष्टाञ्चतुःपलमितां जम्बू-पल्लव-वेष्टिताम्।
सूत्रेण बद्धां गोधूम-पिष्टेन परिवेष्टिताम्।
लिप्ताञ्च घन-पङ्केन गोमयैरग्निना दहेत् ॥२४॥
अङ्गार-वर्णाञ्च मृदं दृष्ट्वा वह्नेः समुद्धरेत्।
ततो रसं गृहीत्वा च शीतं क्षौद्र-युतं पिबेत्। [पुटपाकः।
जयेत्सर्वानतीसारान्दुस्तरान् सुचिरोत्थितान् ॥२५॥ कुटज-
काण्डितं तण्डुलपलं जलेऽष्ट-गुणिते क्षिपेत्।
भावयित्वा जलं ग्राह्यं देयं सर्वत्र कर्मसु ॥२६॥तण्डुलजलम्।
श्योनाक-त्वक्कृतश्चैव पुट-पाकोऽग्नि-दीपनः।

मधु-मोचरसाभ्याञ्च युक्त: सर्वातिसारनुत्॥२७॥ अरलु-पाक:
न्यग्रोधादेश्च कल्केन पूरयेत्तैर-तित्तरम्।
निरन्त्रमुदरं सम्यक्पुटपाकेन तत्पचेत्॥२८॥ [ पाक:
तत्कल्कस्य रस: क्षौद्रयुक्त: सर्वातिसारनुत्। तित्तरि पुट-
पुटपाकेन विपचेत् सुपक्वं दाडिमी-फलम् ॥२९॥
तद्रसो मधु-संयुक्त: सर्वातीसार-नाशन:। दाडिमीपुटपाक:।
वीजपूराऽम्र-जम्बूनां पल्लवानि जटा: पृथक्।
विपचेत्पुटपाकेन क्षौद्र-युक्तश्च तद्रस: ॥३०॥
छर्द्दिं निवारयेद्-घोरां सर्व-दोषसमुद्भवाम् ।पल्लव-पुटपाक:।
पिष्टानां वृष-पत्राणां पुटपाक-रसोहिम:।।३१॥
मधु-युक्तो जयेद्रक्त-पित्त-कास-ज्वर-क्षयान् ।वासा-पुटपाक:
पचेत् क्षुद्रां सपञ्चाङ्गां पुटपाकेन तद्रस: ।।३२॥ [पाक:
पिप्पली-चूर्ण-संयुक्त: कास-श्वास-क्षुधाऽपह:। कण्टकारी पुट-
विभीतक-फलं किञ्चिद् घृतेनाभ्यज्य लेपयेत्।
गोधूम-पिष्टेनाङ्गारे विपचेत् पुटपाकवत् ॥ ३३ ॥
तत: पक्वं समुद्धृत्य त्वचन्तस्य मुखे क्षिपेत्। [ पाक:।
कास-श्वास-प्रतिश्याय-स्वरभङ्गाञ्जयेत्तत:॥३४॥विभीतक-पुट-
चूर्णं किञ्चिद् घृताभ्यक्तं शुण्ठ्या एरण्डजैर्दलै:।
वेष्टितं पुटपाकेन विपचेन्मन्द-वह्निना ॥ ३५ ॥
तत उद्धृत्य तच्चूर्णं ग्राह्यं प्रात: सितासमम्। [ पाक:।
तेन यान्ति शमं पीडा आमातीसार-सम्भवा:।।३६।।शुण्ठीपुट-
शुण्ठी-कल्कं विनिक्षिप्य-रसैरेरण्ड-मूलजै:।
विपचेत्पुटपाकेन तद्रस: क्षौद्र-संयुत:।

आमवात-समुद्भूतां पीड़ां जयति दुस्तराम् ॥२७॥ द्वितीय-पुष्की

सौरणं कन्दमादाय पुटपाकेन पाचयेत् ।

सतैल-लवणस्तस्य रसश्चार्शोविकार-नुत् ॥२८॥ सूरण-पुटपाकः

शराव-सम्पुटे दग्धं शृङ्गं हरिणजं पिबेत् ।

गव्येन सर्पिषा युक्तं हृच्छूलं नाशयेद् ध्रुवम् ॥२९॥ शृङ्गपुटपाकः

इति मध्य-खण्डे प्रथमोऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः ।

### अथ क्वाथ-कल्पना ॥

पानीयं षोडश-गुणं क्षुण्णे द्रव्य-पले क्षिपेत् ।

मृत्पात्रे क्वाथयेद् ग्राह्यमष्टमांशावशेषितम् ॥१॥

तज्जलं पाययेद्धीमान् कोष्णं मृद्वग्नि-साधितम् ।

शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ॥२॥

आहार-रस-पाकेच सञ्जाते द्विपलोन्मितम् ।

वृद्ध-वैद्योपदेशेन पिबेत्क्वाथं सुपाचितम् ॥३॥

क्वाथे क्षिपेत्सितामंशैश्चतुर्थाष्टम-षोडशैः ।

वात-पित्त-कफातङ्के विपरीतं मधु स्मृतम् ॥४॥

जीरकं गुग्गुलुं क्षारं लवणञ्च शिलाजतु ।

हिङ्गु त्रिकटुकञ्चैव क्वाथे शाणोन्मितं क्षिपेत् ॥५॥

क्षीरं घृतं गुडं तैलं मूत्रं चान्यद्द्रवन्तथा ।

कल्कं चूर्णादिकं क्वाथे निक्षिपेत्कर्ष-सम्मितम् ॥६॥

गुडूची-धान्यकाऽरिष्ट-पद्मकारक्तचन्दनैः ।

गुडूच्यादि-गणःक्वाथः सर्व्व-ज्वर-हरः स्मृतः। [ क्वाथः॥
दीपनो दाह-हृल्लास-तृष्णा-छर्य्यरुची जयेत् ॥७॥गुडूच्यादि-
गुडूची पिप्पली-मूल नागरैः पाचनं स्मृतम्। [ वातज्वरे
दद्याद्वात-ज्वरे पूर्ण-लिङ्गे सप्तम-वासरे॥८॥गुडूच्यादिपाचनम्
शालि-पर्णी बला द्राक्षा गुडूची सारिवा तथा। [पर्ण्यादिक्वाथः।
आसां क्वाथं पिबेत्कोष्णं तीव्र-वात-ज्वर-च्छिदम् ॥९॥शालि
काश्मरी सारिवा द्राक्षा-त्रायमाणामृताभवः। [ क्वाथः
कषायः सगुडः पीतो वात-ज्वर-विनाशनः ॥१०॥ काश्मर्य्यादि
कट्फलेन्द्रयवापाठातिक्तामुस्तैः शृतं जलम्। [पाचनं पित्तज्वरे
पाचनं दशमेऽह्नि स्यात्तीव्र-पित्तज्वरे नृणाम्॥११॥कट्फलादि
पर्पटी वासकस्तिक्ता कैराती धन्वयासकः।
प्रियङ्गुश्च कृतः क्वाथ एषां शर्करया युतः। [ क्वाथः।
पिपासा-दाह-पित्तास्रयुक्तं पित्त-ज्वरं जयेत् ॥१२॥ पर्पटादि
द्राक्षा हरीतकी-मुस्तं कटुकीकृतमालकः।
पर्पटश्च कृतः क्वाथ एषां पित्त-ज्वरापहः।
तृस्मूर्च्छा-दाह-पित्तास्रक्शमनो भेदनः स्मृतः ॥१३॥
एकः पर्प्पटकः श्रेष्ठः पित्तज्वर विनाशनः।
किं पुनर्यदि युज्येत चन्दनोशीरवालकैः ॥१४॥द्राक्षादि क्वाथं
वीज-पुर-शिफा-पथ्यानागर-ग्रन्थिकैः शृतम्।[पाचनं श्लेष्मज्वरे
सक्षारं पाचनं श्लेष्म-ज्वरे द्वादश-वासरे ॥१५॥वीजपूरादि-
भूनिम्ब-निम्ब-पिप्पल्यःसटी-शुण्ठी-शतावरी। [क्वाथः
गुडूची वृहतीचेति क्वाथो हन्यात् कफज्वरम् भूनिम्बादि
पर्प्पटाब्दामृताविश्व-कैरातैः साधितं जलम् ॥१६॥

पञ्च-भद्रमिदं ज्ञेयं वात-पित्त-ज्वरापहम् । पञ्चभद्रम् ॥
पटोल-त्रिफला-तिक्ता-सटी वासाऽमृताभव: । [वासादिक्वाथ: ।
क्वाथो मधु-युत: पीतो हन्यात् कफकृतं-ज्वरम्॥१७॥पटो-
लुद्रा-शुण्ठी-गुडूचीनां कषाय: पौष्करस्य च ।
कफ-वाताधिके पेयो ज्वरे-वापि त्रिदोषजे ॥१८॥
कास-श्वासा-रुचिकरे-पार्श्व-शूलविधायिनि । लघुक्षुद्रादिक्वाथ:॥
आरग्वध-कणामूल-मुस्ता-तिक्ता-भयाकृत: ।
क्वाथ: शमयति क्षिप्रं ज्वरं वात-कफोद्भवम् ॥१९॥
आम-शूल-प्रशमनोभेदी दीपन-पाचन: । आराग्वधादिक्वाथ: ॥
अमृतारिष्ट-कटुका-मुस्ते न्द्रयव-नागरै: ।
पटोल-चन्दनाभ्याञ्च पिप्पली-चूर्ण-युक्तृतम् ॥२०॥
अमृताष्टकमेतच्च पित्त-श्लेष्म-ज्वरापहम् ।
छर्द्यरोचक हृल्लासदाह-तृष्णा-विनाशनम् ॥२१॥अमृता ष्टकं
कण्टकारी-द्वयं शुण्ठीधान्यकं सुरदारुच ।
एभि: शृतं पाचनं स्यात्सर्व-ज्वरविनाशनम् ॥२२॥
॥ इति कण्टकारी पाचनं सर्वज्वरेषु ॥—
शालि-पर्णी पृष्टि-पर्णी बृहती-द्वय गोक्षुरै:
बिल्वाग्निमन्थ-शोनाक-काश्मरी-पाटला-युतै: ।
दशमूलमिति ख्यातं क्वथितं तज्जलं पिबेत् ॥२३॥
पिप्पली चूर्ण संयुक्तं वातश्लेष्महरं परम् ।
सन्निपातज्वरहरं सूतिका-दोष-नाशनं ॥२४॥
शोषशोत्थभ्रम-स्वेद-कास-श्वास-विकार-नुत् [सन्निपातज्वरे ।
हृत्कण्ठग्रह-पार्श्वार्त्ति-तन्द्रा-मस्तक-शूलहृत् ॥२५॥ दशमूलं

अभया मुस्तधान्याकरक्त चन्दन पद्मकैः ।
वासकेन्द्रयवोशीर गुडूचीक्तत मालकैः ॥२६॥
पाठा नागर तिक्ताभिः पिप्पलीचूर्णयुक् क्वतम् ।
पिवेत्रिदोष ज्वर जित् पिपासाकासदाहनुत् ॥२७॥
प्रलापश्वासतन्द्राघ्नं दीपनं पाचनं परं । [सन्निपात ज्वरे ।
विण्मूत्रानिलविष्टम्भवमीशोषारुचिच्छिदम् ॥२८॥ अभयादिः
पिप्पलीपिप्पली-मूल चव्यचित्रकनागरैः ।
वचासातिविषाजाजीपाठा-वत्सकरेणुकैः ॥२९॥
किराततिक्तकं मूर्वासर्षपामरिचानिच ।
कटुकं पुष्करभार्गीविड़ङ्गकर्कटाह्वयम् ॥३०॥
अर्कमूल वृहत्सिंही श्रेयसी सदुरालभा ।
दीप्यकश्वाजमोदाच शुकनासादिहिङ्गुभिः ॥३१॥
एतानि समभागानि गणोऽष्टविंशको मतः ।
कषायमुपभुञ्जीत वातश्लेष्मज्वरापहम् ॥३२॥
हन्ति वातं तथा शीतं क्लेदजं प्रबलं कफम् ।
प्रलाप श्वातिनिन्द्राञ्च रोमहर्षारुचिस्तथा ॥३३॥
महावातेऽपतन्त्रे च सर्वगात्रेच शून्यताम् ।[ सन्निपाते ।
अयं सर्व्वज्वरान् हन्ति सन्निपातांस्त्रयोदश ॥३४॥ पिप्पल्यादिः
किरातकटुकीमुस्ताधान्येन्द्रयवनागरैः ।
दशमूल महादारुगजपिप्पलिकायुतैः ॥३५॥
क्वतः कषायः पार्श्वार्त्तिसन्निपातज्वरं जयेत् ।
कासश्वासवमीहिक्कातन्द्राहृद्ग्रहनाशनः ॥३६॥ अष्टादशाङ्गः
कट्फला ब्दुदभार्गीभिर्धान्य-रोहिष पर्प्पटैः ।

वचा हरीतको शृङ्गी देवदारु महौषधैः ॥३७॥ [क्वाथः
क्वाथः कासं ज्वरं हन्ति श्वास श्लेष्मगल ग्रहान्। कट्फलादि-
क्वाथो जीर्णज्वरान् हन्ति गुडूच्यापिप्पलीयुतः ॥३८॥
तथा पर्प्पटजः क्वाथः पित्तज्वरहरःपरः।
निर्दिग्धिकाऽमृताशुण्ठी कषायं पाययेद्भिषक् ॥३९॥
पिप्पली-चूर्ण संयुक्तं श्वास कासार्द्दितापहम्। [दिजीर्ण ज्वरे
पीनसारुचिवैश्वर्य शूलाजीर्ण ज्वरच्छिदम् ॥४०॥ निर्दिग्धिका-
क्षुद्रा धान्याक शुण्ठीभिर्गुडूची मुस्त पद्मकैः।
रक्तचन्दन-भूनिम्ब पटोल वृष पौष्करैः।
कटुकेन्द्रयवाऽरिष्ट भार्गी पर्प्पटकैः समैः ॥४१॥ [ज्वरे
क्वाथं प्रातर्निषेवेत सर्व शीत ज्वरच्छिदम्। वृहत्क्षुद्रादिशीत-
मुस्ताक्षुद्रामृताशुण्ठी धात्रीक्वाथः समाक्षिकः ॥४२॥
पिप्पली चूर्ण संयुक्तो विषम ज्वर नाशनः। मुस्तादिविषमज्वरे
पटोल त्रिफला निम्ब द्राक्षपा शम्याक वासकैः॥४३॥[ह्निकज्वरे
क्वाथः सिता मधु युतो जयेदैकाह्निकं ज्वरम्। पटोलादिएका-
गुडूची धान्य मुस्ताभिश्चन्दनोशीर नागरैः।
कृतं क्वाथं पिबेत् क्षौद्र सिता युक्तं ज्वरातुरः ॥४४॥ [ज्वरे
तृतीय ज्वर नाशाय तृष्णादाह निवारणम्। गुडूच्यादिः तृतीय
देवदारु शिवा वासा शालिपर्णी महौषधैः ॥४५॥
धात्री युक्तं कृतं शीतं दद्यान्मधु सितायुतम्। [चातुर्थकज्वरे
चातुर्थक ज्वरे श्वासे कासे मन्दाऽनले तथा॥४६॥[देवदार्व्यादिः
गुडूची धान्यकोशीर शुण्ठी वालक पर्पटैः।
विल्वप्रतिविषा पाठा रक्तचन्दन वत्सकैः ॥४७॥

किरातमुस्तेन्द्रयवैः क्वथितं शिशिरं पिवेत् । [ज्वरातीसारे
सक्षौद्रं रक्त पित्तघ्नं ज्वरातीसार नाशनम् ॥४८॥बृहद् भूचादि
नागरं कुटजो मुस्तममृताऽतिविषा तथा । [ज्वरातीसारे
एभिःकृतं पिवेत् क्वाथं ज्वरातीसार नाशनम्॥४९॥नागरादिः
धान्य वालक विल्वाब्द नागरैः साधितं जलम् ।
आम शूलहरं ग्राहि दीपनं पाचनं परम् ॥ ५० ॥धान्यपञ्चकम्
धान्य नागरजःक्वाथः पाचनो दीपनस्तथा । [गरम्
एरण्ड मूल युक्तश्च जयेदामानिलव्यथाम् ॥ ५१ ॥[धान्यना-
वत्सकाऽतिविषा-विल्व मुस्त बालकजः सृतः ।
अतीसारं जयेत्सामं चिरजं रक्त शूल जित् ॥५२॥वत्सकादिः
कुटजातिविषा पाठा धातकी लोध्रमुस्तकैः ।
ह्रीवेर दाडिम युतैः कृतः क्वाथः समाक्षिकः ॥५३॥
पेयो मोचरसेनैव कुटजाष्टक संज्ञकः ।
अतीसारान् जयेद्दाह रक्तशूलामदुस्तरान् ॥५४॥ कुटजाष्टकम
ह्रीवेरधातकी लोध्र पाठा लज्जालु वत्सकैः ।
धान्यकातिविषा मुस्ता गुडूची विल्वनागरैः ॥५५॥
कृतः कषायः शमयेदतीसारं चिरोत्थितम् ।
अरोचकामशूलघ्नो ज्वरघ्नः पाचनः स्मृतः ॥ ५६॥ ह्रीवेरादिः
धातकीविल्व लोध्राणि पाटालज्जालुवत्सकैः ।
धान्य कातिविषामुस्तबालकं गजपिप्पली ।
एभिःकृतं सृतं शीतं शिशुभ्यः क्षौद्रसंयुतम् ॥५७॥
प्रदद्यादवलेहं वा सर्व्वातीसारशान्तये । धातक्यादिः
शालपर्णी बलाविल्वधान्यशुण्ठीकृतःसृतः ॥५८॥

श्राध्मानशूलसहितां वातजां ग्रहणीं जयेत् । शालपर्ण्यादिः
गुडूच्यतिविषा शुण्ठी मुस्तैःक्वाथः कृतो जयेत् ॥ ५८ ॥
श्रामानुसक्तां ग्रहणीं ग्राही पाचन-दीपनः । चातुर्भद्रकम्
यव धान्य पटोलानां क्वाथः सक्षौद्र शर्करः ॥६०॥
योन्य स्कृयं तिसारेषु विल्वाम्राख्यिभवस्तथा । इन्द्रयवादिः
त्रिफला देवदारुश्च मुस्ता मूषककर्णिका ॥६१॥
शिग्रुरेतैःकृतः क्वाथः पिप्पली-चूर्ण-संयुतः ।
विड़ङ्ग-चूर्ण-युक्तश्च कमिघ्नः क्रिमि रोगहा ॥६२॥ त्रिफलादिः
फलत्रिकाऽमृता तिक्ता निम्ब कैरात वासकैः ।[कादिः
जयेन्मधुयुतः क्वाथः कामला पाण्डुतान्तथा ॥६३॥ फलत्रि
पुनर्नवाऽभया निम्ब दार्वी तिक्त पटोलकैः ।
गुडची नागर युतैः क्वाथो गोमूत्र संयुतः ॥६४॥
पाण्डु कासोदर श्वासशूल सर्वाङ्ग शोथहा ।
वासा द्राक्षाभया क्वाथः पीतः सक्षौद्र शर्करः । [वासकक्वाथः
निहन्ति रक्त पित्तार्त्तिश्वास कासञ्च दारुणम् ॥६५॥रक्तपित्त
रक्त पित्तं चयं कासं श्लेष्म पित्त ज्वरन्तथा ।
केवलो वासकः क्वाथः पीतः क्षौद्रेण नाशयेत् ॥ ६६ ॥
वासा क्षुद्राऽमृता क्वाथः क्षौद्रेण ज्वर कासहा ।
कासघ्नः पिप्पलीचूर्णयुक्तः क्षुद्रामृतस्तथा ॥६७॥
क्षुद्रा कुलत्थ वासाभिर्नागरेण च साधितः ।
क्वाथः पुष्कर चूर्णाढ्यः श्वास कासौ निवारयेत् ॥६८॥
रेणुका पिप्पली क्वाथो हिङ्गु कल्केन संयुतः ।
पानादेवहि पञ्चापि हिक्का नाशयति क्षणात् ॥६९॥

विल्व त्वचो गुडूच्या वा क्वाथः चौद्रेण संयुतः ।
जयेत्त्रिदोषजं छर्दिं पर्पटः पित्तजन्तथा ॥ ७० ॥
अथ गृध्रस्यां योगद्वयमाह ॥———
हिङ्गु पौष्कर चूर्णाढ्यो दशमूलशृतो जयेत् ।
गृध्रसीं केवलैः क्वाथः शेफाली पत्रजस्तथा ।
[रास्नापञ्चकम्] रास्नामृता महादारु नागरैरण्डजं शृतम् ७१
सप्तधातुगते वाते सामिसर्वाङ्गगे पिवेत् ।
[रास्नासप्तकम्] रास्ना गोक्षुरकैरण्डदेवदारु पुनर्नवा ॥ ७२॥
गुडूच्यारग्वधश्चैव क्वाथमेषां विपाचयेत् ।
शुण्ठी चूर्णेन संयुक्तं पिवेज्जङ्घा कटी-ग्रहे ॥७३॥
पार्श्वपृष्ठोरु पीडायामामवाते सुदुस्तरे ।
[महारास्नादिः]रास्नाद्विगुण भागा स्यादेक भागा ततो परा७४
धन्वयासवलैरण्ड देवदारु सटी वचा ।
वासको नागरं पथ्या चव्यमुस्त पुनर्नवा ॥७५॥
गुडूची वृद्ध दारश्च शत पुष्पाच गोक्षुरः ।
अश्व-गन्धा प्रतिविषा कृतमाल शतावरी॥७६॥
कृष्णासहचरश्चैव धान्यकं वृहती द्वयम् ।
एभिः कृतं पिवेत् क्वाथं शुण्ठी चूर्णेन संयुतम् ॥७७॥
कृष्णाचूर्णेन वा योग राज गुग्गुलुना-थवा ।
अजमोदादिना वापि तैलेनैरण्डजेन वा ॥७८॥
सर्व्वाङ्ग कम्पे कुब्जत्वे पक्षाघातेच वाहुके ।
गृध्रस्यामाम-वाते च श्लीपदे चापतानके ॥७९॥
अन्त्र-वृद्धौ तथाध्माने जङ्घा जानु प्रदेशके ।

शुक्रामये मेढ्र रोगे वन्ध्या योन्यामयेषु च ॥८०॥
महाराजादिराख्यातो महाया गर्भकारणम् । महाराजादिः
एरण्डो वीजपूरश्च गोक्षुर वृंहती द्वयम् ॥८१॥
अश्म भेदस्तथाविल्व एतन्मूलैः शृतःशृतः ।
एरण्ड तैलं हिङ्ग्वाढ्यः सयवक्षार सैन्धवः ॥८२॥
स्तनस्कन्धकटी मेढ्र हृदयोर्त्यां व्यथां जयेत् । एरण्डसप्तकः
नागरैरण्डजः क्वाथः क्वाथ इन्द्रयवस्य च ॥८३॥
हिङ्गु सौवर्चलोपेतो वात शूल निवारणः ।
त्रिफलारग्वधः क्वाथः शर्करा क्षौद्र संयुतः ॥८४॥
रक्त पित्त हरो दाह पित्त शूल निवारणः । इति पित्तशूल
एरण्ड मूलद्विपलं जलेऽष्टगुणिते पचेत् ॥८५॥
तत्क्वाथो यावशूकाढ्यः पार्श्व हृत् कफ शूलहा ।
दशमूलशृतः क्वाथः सयवक्षारसैन्धवः ॥८६॥
हृद्रोग गुल्म शूलानि कासं श्वासञ्च नाशयेत् ।
हरीतकी दुरालभा कृतमालकमोक्षुरैः ॥८७॥
पाषाणभेदसहितैः क्वाथो माक्षिकसंयुतः । [मूत्रकृच्छ्रे ।
विबन्ध मूत्रकृच्छ्रेच सदाहे सरुजे हितः ॥८८॥ हरीतक्यादि-
वीरतरुश्च वन्दाकाम्रः सहचर त्रयम् ।
कुश-द्वयं नलो गुन्द्रा वक पुष्पोऽग्निमन्थकः ॥ ८९ ॥
मूर्वा पाषाणभेदश्च श्योनाको गोक्षुरस्तथा ।
अपामार्गश्च कमलं ब्राह्मी चेति गणोवरः ॥ ९० ॥
वीर तर्वादिरित्युक्तः शर्कराश्मरि कृच्छ्रहा ।
मूत्राघात वायुरोगाणाशयेदखिलानपि ॥९१॥वीरतर्वादिः

एलामधुकगोकण्टरेणुकैरण्डवासकः ।
कृच्छ्राश्मभेदसहितः क्वाथ एषां सुसाधितः ॥ ९२ ॥
शिलाजतु-युतः पेयः शर्कराश्मरि कृच्छ्रहा । एलादिः ।
समूत्र-गोक्षुर-क्वाथः सितामाक्षिक संयुतः ॥ ९३ ॥
नाशयेन्मूत्र कृच्छ्राणि तथा चोष्ण समीरणम् ।
[अथ प्रमेहे] वत्सादाव्यब्दद्राक्षाणां क्वाथो क्षौद्रेण मेहहा॥९४॥
वत्सक त्रिफला दार्वी मुस्ता बीजकजस्तथा ।
फलत्रिकाब्ददार्वीणां विशालायाः शृतं पिवेत् ॥९५॥
निशा कल्क युतं सर्वप्रमेह विनिवृत्तये। फलत्रिकादिः ।
दार्वी रसाञ्जनं मुस्तं भल्लातः श्रीफलं वृषः ॥९६॥
कैरातश्च पिवेदेषां क्वाथं शीतं समाक्षिकम् ।
जयेत्सशूलं प्रदरं शीत श्वेतासितारुणम् ॥९७॥ दार्व्यादिः
न्यग्रोध प्लक्ष कोशाम्र वेतसो वदरी तुणिः ।
मधुयष्टी पियालश्च रोद्र द्वयमुदुम्बरः ॥९८॥
पिप्पलश्च मधूकश्च तथा पारिश पिप्पलः ।
सल्लकी तिन्दुकी जम्बू-द्वयमाम्रतरुः शिवा ॥९९॥
कदम्ब ककुभौ चैव भल्लातक फलानि च ।
न्यग्रोधादि गण क्वाथं यथालाभञ्च कारयेत् ॥१००॥
अयं क्वाथो महाग्राही भग्नोभग्नञ्च साधयेत् । [कषायः
योनिदोष-हरो दाहमेदोमेह विषापहः ॥१०१॥न्यग्रोधादि-
विल्वोऽग्निमन्थः श्योनाकः काश्मर्य पाटलिस्तथा ।
क्वाथ एषां जयेन्मेदोदोषं क्षौद्रेण संयुतः ॥१०२॥
क्षौद्रेण त्रिफला-क्वाथः पीतो मेदोहरः स्मृतः ।

शीतीभूतं तथोष्णाम्बु मेदोघ्नत् चौद्रसंयुतः ॥१०३॥
चव्य चित्रक विश्वानां साधितो देवदारुणा ।
क्वाथः चित्रचूर्णसंयुतो गोमुत्रेणोदरान् जयेत् ॥१०४॥
पुनर्नवामृतादारु पथ्या नागर साधितः ।
गोमूत्र गुग्गुलु युतः क्वाथः शोथोदरापहः ॥१०५॥
पथ्यारोहितक क्वाथं यवचार कणायुतम् ।
पिवेत्प्रातर्यकृत्प्लीहगुल्मोदर निवृत्तये ॥१०६॥
[अथशोथे] पुनर्नवा दारु निशा निशा शुण्ठी हरीतकी ।
गुडूचीचित्रकोभार्गी देवदारुकृतैः स्मृतः ॥१०७॥
पाणि पादोदरमुख प्राप्तं शोफं निवारयेत् ।
फल-त्रिकोद्भवं क्वाथं गोमूत्रेणैव पाचयेत् ॥१०८॥
वात-श्लेष्म-कृतं हन्ति शोथं द्वयज-सम्भवम् ।
[अथान्त्रवृद्धौ]रास्नामृता वला यष्टी गोकण्टैर रण्डजः स्मृतः१०९
एरण्ड तैल-संयुक्तो वृद्धिमन्त्र-भवां जयेत् ।

गण्डमालायां योग इयमाह।——

काञ्चनारत्वचः क्वाथः शुण्ठी चूर्णेन नाशयेत् ॥११०॥
गण्डमालान्तथाक्वाथः चौद्रेण वरुणत्वचः ।
साखोट वल्कल-क्वाथं गो-मूत्रेण युतं पिवेत् ॥१११॥
श्लीपदानां विनाशाय मेदो-दोष निवृत्तये ।
पुनर्नवा वरुणयोः क्वाथोऽन्तर्विद्रधिं जयेत् ॥११२॥
तथा शिग्रु भवः क्वाथो हिङ्गु सैन्धवसंयुतः ।
वरुणादि-गण-क्वाथमपक्वे मध्य विद्रधौ ॥११३॥

ऊषकादि-रजो युक्तं पिवेच्छमन-हेतवे।
वरुणोवक पुष्पश्च विल्वापामार्ग चित्रकाः ॥११४॥
अग्निमन्थ द्वयं शिग्रु द्वयञ्च बृहती द्वयम्।
सैरेयक त्रयं मूर्वा मेषशृङ्गी किरातकः ॥११५॥
अजाशृङ्गीच विम्बीच करञ्जश्च शतावरी।
वरुणादि-गण क्वाथः कफ मेदो हरः स्मृतः ॥११६॥
हन्ति गुल्मं शिरःशूलं तथाभ्यन्तरविद्रधीन्। वरुणादिः।
खदिर त्रिफला क्वाथो महिषो घृत संयुतः ॥११७॥
विडङ्ग चूर्ण युक्तश्च भगन्दर विनाशनः।
[अथो पदंशे]पटोल त्रिफला निम्बकिरात खदिरासनैः ॥११८॥
क्वाथः पीतो जयेत्सर्वानुपदंशान् सुगुग्गुलुः।
अमृतेरण्ड वासानां क्वाथ एरण्ड तैल युक् ॥११९॥
पीतः सर्वाङ्ग सञ्चारिं वातरक्तं जयेद्ध्रुवम्।
पटोल त्रिफला तिक्ता गुडूचीच शतावरी ॥१२० ॥
एतत्क्वाथो जयेत्पीतो वातास्रं दाह संयुतम्। पटोलादिः।
क्वाथोऽवलाजचूर्णाढ्यो धात्री खदिर सारयोः ॥१२१॥
जयेत् सुशीलितो नित्यं श्वित्रं पथ्याशिनां नृणाम्। अवलाजादिः
मांञ्जिष्टा त्रिफला तिक्ता वचा दारु निशा मृताः ॥१२२॥
[ न्‍म्बयोर्षां कृतः क्वाथो वात रक्त विनाशनः। [ ष्टादिः
पामा-कपालिका कुष्ट रक्त मण्डल जिन्मतः ॥१२३॥लघुमञ्जि-
मञ्जिष्टा मुस्त कुटजगुडूची कुष्ट नागरैः।
भार्गी क्षुद्रा वचा निम्ब निशा द्वय फल त्रिकैः ॥१२४॥
पटोल कटुका मूर्व्वा विडङ्गासन चित्रकैः।

शतावरी त्रायमाणा कणेन्द्रयव वासकैः ॥१२५॥
भृङ्गराज महादारु पाठा खदिर चन्दनैः।
त्रिवृद्वरुणकैरात वाकुचो कृतमालकैः।
आस्फोटक महानिम्ब करजाति विषाजलैः ॥११६॥
इन्द्रवारुणिकानन्ता सारिवापर्पटैः समैः
एभिः कृतं पिवेत् क्काथं कणा गुग्गुलु संयुतम्।
अष्टादशेषु कुष्टेषु वात रक्तेऽर्द्दिते तथा ॥१२७॥
उपदंशे श्लीपदेच प्रसुप्ती पत्त घातके। [ इत्यादिः
मेदोदोषे नेत्ररोगे मञ्जिष्टादिः प्रशस्यते ॥१२८॥ वृहन्मञ्जि-
पथ्याच धात्री भूनिम्ब निशानिम्बामृतायुतैः
कृतः क्काथः षडङ्गोऽयं सगुडः शीर्ष शूल हृत् ॥१२९॥
भूशङ्ख कर्णशूलानि तथार्द्धशिरसो रुजम्।
सूर्य्यावर्त्तं शङ्खकञ्च दन्तपानञ्च तद्रुजम् ॥१३०॥
नक्तान्ध्यं पटलं शुक्रं चक्षुः पीडां व्यपोहति। पथ्यादिः।
वासा विश्वामृता-दार्व्वीरक्त चन्दन चित्रकैः ॥१३१॥
भूनिम्व निम्बकटुकापटोल त्रिफलाम्वुदैः।
यव कालिङ्ग कुटजैः क्काथः सर्वाचि रोगहा ॥१३२॥
वैस्वर्यं पीनसं श्वासं नाशयेदुरसः क्षतम्। वासादिः।
अमृता त्रिफला क्काथः पिप्पलीचूर्ण संयुतः ॥१३३॥
सक्षौद्रः शीतलो नित्यं सर्व्वं नेत्र व्यथां जयेत्। अमृतादिः।
अश्वत्थोदुम्वर प्लक्ष वट-वेतसजः स्मृतः॥१३४॥
अथ शोथोपदंशानां नाशनः क्षालनः स्मृतः। इतिक्काथः।
[प्रमथ्या] प्रमथ्या प्रोच्यते द्रव्य पलात्कल्कीकृतात्सृता ॥१३५॥

तोयेऽष्टगुणिते तस्याः पानमाहुः पल द्वयम् ।
मुस्तकेन्द्रयवैः सिद्धा प्रमथ्या द्विपलोन्मिता ॥१३६॥
सुशीता मधु संयुक्ता रक्तातीसारनाशिनी ।
[यवागू] साध्यं चतुःपलं द्रव्यं चतुःषष्टि-पलेऽम्बुनि ॥ १३७ ॥
तत्क्वाथेनार्द्ध-शिष्टेन यवागूं साधयेद्घनाम् ।
आम्राऽम्रातक-जम्बूत्वक् कषाये विपचेद्बुधः ॥१३८॥
यवागूं शालिभिर्युक्तान्तां भुक्त्वा ग्रहणीं जयेत् ।
[यूषः] कल्क-द्रव्य पलं शुण्ठी-पिप्पली-चार्द्धकर्षिका ॥१३९॥
वारि-प्रस्थेन विपचेत्स द्रवो यूष उच्यते ।
कुलत्थ-यवकोलैश्च मुद्गैर्मूलक-मुद्गिकैः ॥१४०॥
शुण्ठी-धान्याक-युक्तैश्च यूषः श्लेष्मानिलापहः ।
सप्त-मुष्टिक इत्येषः सन्निपात-ज्वरान् जयेत् ॥१४१॥
आमवात-हरः कण्ठ-हृद्वक्त्राणां विशोधनः । सप्तमुष्टिकयूषौ
[पानादि] क्षुण्णं द्रव्य-पलं साध्यं चतुःषष्टि-पले जले ॥१४२॥
अर्द्ध-शिष्टञ्च तद्देयं पाने भक्तादि-सम्विधौ ।
उशीर पर्पटोदीच्यमुस्त-नागर-चन्दनैः ॥१४३॥ [ क्वथना
जलं सृतं हिमं पेयं पिपासा-ज्वर-नाशनम् । इति पानादि-
अष्टमेनांशशेषेण चतुर्थे-नार्द्धकेन वा ॥१४४॥
अथवा क्वथनेनैव सिद्धमुष्णोदकं पिवेत् ।
श्लेष्मामवात-मेदोघ्नं वस्ति-शोधन-दीपनम् ॥१४५॥ [दकम्
कास-श्वास-ज्वरान् हन्ति पीतमुष्णोदकं निशि । इतिउष्णो-
[क्षीरपाक विधिः] क्षीरमष्टगुणं द्रव्यात् क्षीरान्नीरं चतुर्गुणम् ।
क्षीरावशेषं तत्पीतं शूलमामोद्भवं जयेत् ॥१४६॥

[अथान्नप्रक्रिया] अथान्नप्रक्रिया चैव प्रोच्यते नातिविस्तरात् ॥१४७
यवागूः षड्गुण-जले सिद्धा स्यात्कृशरा घना ।
तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता ॥१४८॥
यवागू-र्ग्राहिणी बल्यातर्पणी-वात-नाशिनी । इति यवागूः
विलेपीच घनासिक्तै रसिद्धा नीरे चतुर्गुणे ॥१४९॥
विलेपी तर्पणी हृद्या मधुरा पित्त नाशिनी । इति विलेपी
द्रवाधिका स्वल्पसिक्था चतुर्दश-गुणे जले ॥१५०॥
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद्घनः स्मृतः ।
पेया लघुतरा ज्ञेया ग्राहिणी धातु पुष्टिदा ॥१५१॥
यूषोवल्यस्तनोकण्ठ्योलघुपाकी कफापहः । पेयायूषौ
जले चतुर्दश-गुणे तण्डुलानां चतुःपलम् ॥१५२॥
विपचेत्स्नावयेन्मण्डं सभक्तो मधुरो लघु । इति भक्तः ।
नीरे चतुर्दश-गुणे सिद्धो मण्डस्त्व सिक्थकः ॥१५३॥
शुण्ठी-सैन्धव संयुक्तः पाचनो दीपनः स्मृतः । इतिशुद्धमण्डः।
धान्य-त्रिकटु-सिन्धूत्थ-युक्तस्तक्रेण योजितः ॥१५४॥
भृष्टश्च हिङ्गुतैलाभ्यां स मण्डोऽष्ट-गुणः स्मृतः ।
दीपनः प्राणदो वस्ति शोधनो रक्त वर्द्धनः ॥१५५॥ [मण्डः
ज्वर-जित्सर्व-दोषघ्नो मण्डोऽष्ट-गुणमुच्यते । इत्यष्टगुण-
सुकण्डितैस्तथाभृष्टैर्वाट्यमण्डो यवैर्भवेत् ॥१५६॥
कफ-पित्त-हरः कण्ठ्यो रक्त-पित्त-प्रसादनः । इतिवाट्यमण्डः
लाजै र्वा तण्डुलैर्भृष्टैर्लाज मण्डःप्रकीर्त्तितः । [मण्डः
[श्ले ष्म-पित्त-हरो ग्राही पिपासा ज्वर-जिन्मतः ॥१५७॥लाज-

इति क्वाथादिक-रूपना नाम द्वितीयोऽध्यायः ।

तृतीयोऽध्यायः ।

[अथ फाण्टकल्पना] चुण्णे द्रव्यपले सम्यक् जलमुष्णं विनिक्षिपेत्
मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात् ॥१॥
सःस्याच्चूर्णं द्रवः फाण्टस्तन्मानं द्विपलोन्मितम् ।
मधुश्वेतागुडादींश्च क्वाथवत्तत्र निक्षिपेत् ॥ २ ॥
मधूक पुष्पं मधुकं चन्दनं सपरूषकम् ।
मृणालं कमलं लोध्रं कश्मारी नागकेशरम् ॥३॥
त्रिफला सारिवा द्राक्षा लाजा कोष्णजले क्षिपेत् ।
सिता मधुयुता पेया फाण्टोवासौ हिमोऽथवा ॥४॥
वात पित्तज्वरं दाहं तृष्णा मूर्च्छा रति भ्रमान् ।
रक्त पित्तं मदं हन्यान्नात्र कार्य्या विचारणा ।इतिमधूकफाण्टः।
आम्रजम्बू किशलयैः वटसुङ्ग प्ररोहकैः॥५॥
उशीरेण कृतः फाण्टः सक्षौद्रो ज्वरनाशनः । [ दिफाण्टः
पिपासा छर्यतीसारान्मूर्च्छां जयति दुस्तराम् ॥६॥ आम्रा-
मधूक पुष्प कश्मारी चन्दनोशीर धान्यकैः ।
द्राक्षयाच कृतः फाण्टः शीतः शर्करयायुतः॥७॥[म्रादिफाण्टः
तृष्णा पित्तहरः प्रोक्तो दाह मूर्च्छा भ्रमान्जयेत् ।लघु मधूकपु-
[मन्थः] मन्थोऽपि फाण्टभेदः स्यात्तेनचात्रैव कथ्यते ॥८॥
जले चतुष्पले शीते चुण्णं द्रव्यपलं क्षिपेत् ।
मृत्पात्रे मन्थयेत्सम्यक् तस्माच्च द्विपलं पिबेत् ॥९॥
खर्जूर-दाडिमी-द्राक्षा-तिन्तिडी-काम्बिका-मलैः ।[दिमन्थः
सपरूषैः कृतो मन्थः सर्व-मद्य-विकार-नुत् ॥१०॥खर्जूरा-
क्षौद्र युक्ता मसूराणां सक्तवो दाडिमाम्भसा । [ दिमन्थः

[अथान्नप्रक्रिया] अथान्नप्रक्रिया चैव प्रोच्यते नातिविस्तरात्॥१४७
यवागूः षड्गुण-जले सिद्धा स्यात्कृशरा घना।
तण्डुलैर्मुद्गमाषैश्च तिलैर्वा साधिता हिता॥१४८॥
यवागू-र्ग्राहिणी बल्यातर्पणी-वात-नाशिनी। इति यवागूः
विलेपीच घनासिक्थैरसिद्धा नीरे चतुर्गुणे॥१४९॥
विलेपी तर्पणी हृद्या मधुरा पित्त नाशिनी। इति विलेपी
द्रवाधिका स्वल्पसिक्था चतुर्दश-गुणे जले॥१५०॥
सिद्धा पेया बुधैर्ज्ञेया यूषः किञ्चिद्घनःस्मृतः।
पेया लघुतरा ज्ञेया ग्राहिणी धातु पुष्टिदा॥१५१॥
यूषोवल्यस्तनोकण्ठ्योलघुपाकी कफापहः। पेयायूषौ
जले चतुर्दश-गुणे तण्डुलानां चतुःपलम्॥१५२॥
विपचेत्स्रावयेन्मण्डं सभक्तो मधुरो लघु। इति भक्तः।
नीरे चतुर्दश-गुणे सिद्धो मण्डस्त्व सिक्थकः॥१५३॥
शुण्ठी-सैन्धव संयुक्तः पाचनो दीपनः स्मृतः। इतिशुद्धमण्डः।
धान्य-त्रिकटु-सिन्धूत्थ-युक्तस्तक्रेण योजितः॥१५४॥
भृष्टश्च हिङ्गुतैलाभ्यां स मण्डोऽष्ट-गुणः स्मृतः।
दीपनः प्राणदो वस्ति शोधनो रक्त वर्धनः॥१५५॥ [मण्डः
ज्वर-जित्सर्व-दोषघ्नो मण्डोऽष्ट-गुणमुच्यते। इत्यष्टगुण-
सुकण्डितैस्तथाभृष्टैर्वाट्यमण्डो यवैर्भवेत्॥१५६॥
कफ-पित्त-हरः कण्ठ्यो रक्त-पित्त-प्रसादनः। इतिवाट्यमण्डः
लाजै र्वा तण्डुलैर्भृष्टैर्लाज मण्डःप्रकीर्त्तितः। [मण्डः
[श्लेष्म-पित्त-हरो ग्राही:पिपासा ज्वर-जिन्मतः॥१५७॥लाज-

इति क्वाथादिक-रचना नाम द्वितीयोऽध्यायः।

तृतीयोऽध्यायः ।

[अथ फाण्टकल्पना] क्षुण्णे द्रव्यपले सम्यक् जलमुष्णं विनिक्षिपेत्
मृत्पात्रे कुडवोन्मानं ततस्तु स्रावयेत्पटात् ॥ १ ॥
सःस्याच्चूर्णं द्रवः फाण्टस्तन्मानं द्विपलोन्मितम् ।
मधुश्वेतागुडादींश्च क्वाथवत्तत्र निक्षिपेत् ॥ २ ॥
मधूक पुष्पं मधुकं चन्दनं सपरूषकम् ।
मृणालं कमलं लोध्रं कश्मारी नागकेशरम् ॥३॥
त्रिफला सारिवा द्राक्षा लाजा कोष्णजले क्षिपेत् ।
सिता मधुयुता पेया फाण्टोवासौ हिमोऽथवा ॥४॥
वात पित्तज्वरं दाहं तृष्णा मूर्च्छा रति भ्रमान् ।
रक्त पित्तं मदं हन्यान्नात्र कार्य्या विचारणा । इतिमधूकफाण्टः।
आम्रजम्बू किशलयैः वटशुङ्ग प्ररोहकैः॥५॥
उशीरेण कृतः फाण्टः सक्षौद्रो ज्वरनाशनः । [ द्विफाण्टः
पिपासा छर्द्यतीसारान्मूर्च्छां जयति दुस्तराम् ॥६॥ आम्रा-
मधूक पुष्प कश्मारी चन्दनोशीर धान्यकैः ।
द्राक्षयाच कृतः फाण्टः शीतः शर्करयायुतः॥७॥[म्रादिफाण्टः
तृष्णा पित्त हरः प्रोक्तो दाह मुर्च्छा भ्रमान्जयेत् ।लघु मधू कपु-
[मन्थः] मन्थोऽपि फाण्टभेदः स्यात्तेनचात्रैव कथ्यते ॥८॥
जले चतुष्पले शीते क्षुण्णं द्रव्यपलं क्षिपेत् ।
मृत्पात्रे मन्थयेत्सम्यक् तस्माच्च द्विपलं पिवेत् ॥९॥
खर्जूर-दाडिमी-द्राक्षा-तिन्तिडी-काञ्जिका-मलैः ।[द्विमन्थः
सपरूषैः कृतो मन्थः सर्व-मद्य-विकार-नुत् ॥१०॥ खर्जूरा-
क्षौद्र युक्ता मसूराणां सक्तवो दाडिमाम्भसा । [ द्विमन्थः

मथिता वारयन्त्याशु च्छर्दिं दोषत्रयोद्भवाम् ॥११॥ मसूरा-
प्लाविते: शीत-नीरेण सप्ततैर्यव-सक्तुभि: ।
नाति-सान्द्र-द्रवे-मन्थस्तृष्णा-दाहास्र पित्तहा॥१२॥

---

[हिमकल्पना] चतुर्थोऽध्याय: ।

क्षुस्रं द्रव्यपलं सम्यक्षड्भि र्नीरपलै: प्लुतम् ।
निशोषितं हिम: स: स्यात्तथा: शीत कषाय्व: ॥१॥
तन्मानं फांण्टवज्ज्ञेयं सर्व्वत्रैवैष निश्चय: ।
आम्र जम्बं च ककुभं चूर्णी कृत्य जले क्षिपेत् ॥२॥
हिमं तस्य पिबेत्प्रात: सक्षौद्रं रक्त-पित्त-जित् ।आम्रादिर्हिम:
मरिच मधु यष्टीचं काकोडुम्बर-पल्लवम् ॥३॥
नीलोत्पलं हिमस्तस्य तृष्णाछर्दि निवारण:।मरिचादिर्हिम:
नीलोत्पलं वला द्राक्षा मधूकं मधुकं तथा ॥४॥
उशीरं पद्मकञ्चैव काश्मरीच परूषकम् ।
एतच्छीत-कषायश्च वात पित्त ज्वरान् जयेत् ॥ ५॥
सप्रलाप-भ्रमछर्दिमोहतृष्णानिवारण: । नीलोत् पलादि:
अमृताया हिम: पेयो जीर्ण-ज्वर-हर: स्मृत: ॥६ ॥
वासायाश्च हिम: कास रक्त पित्त ज्वरान् जयेत् । अमृतादि:-
[धान्यादिर्हिम:]प्रात: सशर्कर: पेयो हिमो धान्यक सम्भव:
अन्तर्दाहं तथातृष्णां जयेच्छीतो विशोधन: ॥७॥
धान्याकधात्रीवासानां द्राक्षा पर्पटयोर्हिम:
रक्तपित्त ज्वरं दाहं तृष्णां शोषञ्च नाशयेत् ॥८॥

---

[कल्क कल्पना] पञ्चमोऽध्यायः ।

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वाम्बजलं पिबेत् ।
प्रक्षेपावापि कल्कास्ते तन्मानं कर्ष सम्मितम् ॥१॥
कल्के मधु घृतं तैलं देयं द्विगुण-मात्रया ।
सितां गुडं समं दद्याद् द्रवादेयाश्चतुर्गुणाः ॥२ ॥
त्रि-वृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्या-थवा कणाः ।
पिबेत्पिष्ट्वा दशाहिमं तथाचैवापकर्षयेत् ॥ ३ ॥
एवं विंशद्दिनं सिद्धं पिप्पली वर्द्धमानकम् ।
अनेन पाण्डु वातास्र कास श्वासारुचि-ज्वराः ॥ ४ ॥
उदरार्शः क्षय श्लेष्मवातानश्यन्त्युररोगश्च: पिप्पली-वर्द्धमानं
लेपान्निम्बदलैः कल्को व्रण-शोधन-रोपणः ।
भक्षणाच्छर्दि-कुष्ठानि पित्त श्लेष्म कृमीन् जयेत् ॥५॥
महानिम्बजटाकल्को गृध्रसीनाशनः स्मृतः ।
शुद्धकल्कोरसो नस्यतिल-तैलेन मिश्रितः ।
वात-रोगान् जयेत्तीव्रान्विषम-ज्वर-नाशनः ॥ ६॥
पक्व-कन्दरसो मत्स्य-गुटिका निस्तुषीकृताः ।
पाटयित्वाच मध्यस्थं दूरी कुर्य्यात् तदङ्कुरम् ॥७॥
तदुग्र-गन्धनाशाय रात्रौ तक्रे विनिक्षिपेत् ।
अपनीयच तन्मध्याच्छिलायां पेषयेत्ततः ।
तन्मध्ये पञ्चमांशेन चूर्णमेषां विनिक्षिपेत् ॥८॥
सौवर्चलं यवानीञ्च भर्जितं हिङ्गु सैन्धवम् ।
कटुत्रिकं जीरकञ्च समभागानि कारयेत् ।
एकीकृत्य ततः सर्वं कल्कं कर्ष-प्रमाणतः ॥९॥

खादेदग्नि वलापेक्षी ऋतुदोषाद्यपेक्षया ।
अनुपानं ततः कुर्य्यादेरण्ड शृत-मन्वहम् ।
सर्वाङ्गैकाङ्गजं वातमर्दितश्चापतन्त्रकम् ॥१०॥
अपस्मार मथोन्मादमूरुस्तम्भश्च गृध्रसीम् ।
उरः पृष्ठ कटी पार्श्वं कुक्षि पीड़ां क्रिमीन् जयेत् ॥११॥
अजीर्णमातपं रोषमतिनीरंपयो गुडम् ।
रसोनमश्नन्पुरुषस्त्यजेदेतन्निरन्तरम् ॥१२॥
मद्यं मांसन्तथाम्लञ्च रसं सेवेत नित्यशः । इति रसोनकल्कः ।
पिप्पलीपिप्पलीमूलं भल्लातकफलानिच ।
एतत्कल्कश्च सक्षौद्रऊरुस्तम्भ निवारणः ॥१३॥
विष्णुक्रान्ता जटा कल्कः सिता क्षौद्र घृतैर्युतः ।
परिणाम भवं शूलं नाशयेत्सप्तभिर्दिनैः ।
शुण्ठीतिलगुडैः कल्कं दुग्धेन सह योजयत् ॥१४॥
परिणाम भवं शूलमामवातञ्च नश्यति ।
अपामार्गस्य वीजानां कल्कस्तण्डुलवारिणा ।
पीतो रक्तार्शसां नाशं कुरुते नात्र संशयः ॥१५॥
वदरी मूलकल्केन तिल कल्कश्च योजितः ।
मधुक्षीरयुतः कुर्य्याद्रक्तातीसार नाशनम् ॥१६॥
कुष्माण्डकरसैःपिष्टां लाक्षां कर्षद्वयं पिवेत् ।
रक्तक्षयमुरोघातं क्षयरोगञ्च नाशयेत् ॥१७॥
तण्डुलीयजटाकल्कः सक्षौद्रः सरसाञ्जनः ।
तण्डुलोदकसम्पीतो रक्तप्रदरनाशनः ॥१८॥
अङ्कोल मूलकल्कश्च सक्षौद्रस्तण्डुलाम्बुना ।

अतीसारहरः प्रोक्तस्तथाविषहरः स्मृतः ॥१९॥
वन्ध्याकर्कोटिकामूलं पाटलाया जटाऽथवा ।
घृतेन विल्वमूलं वा द्विविधं नाशयेद्विषम् ॥२०॥
अभयासैन्धवकणाशुण्ठीकल्कस्त्रिदोषहा ।
पथ्यासैन्धवशुण्ठीभिः कल्को दीपनपाचनः ॥२१॥
त्रिवृत्पलाशवीजानि पारसीकयवानिका ।
कम्पिल्लकं विडङ्गञ्च गुडश्च समभागिकः ॥२२॥
तक्रेण कल्क एतेषां पीतः क्रिमिगणापहः ।
नवनीततिलैः कल्को जेता रक्तार्शसां स्मृतः ॥२३॥
नवनीतसिता नागकेशरैश्चापि तद्विधः ।
पीतो मसूरयूषेण कल्कःशुण्ठीसलाटुजः ।
जयेत्संग्रहणीं तद्वत्तक्रेण वृहतीभवः ॥२४॥

[चूर्णकल्पना] षष्ठोऽध्यायः ।

अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् ।
तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसम्मिता ॥१॥
चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत् ।
चूर्णेषु भर्जितं हिङ्गु देयं नोत्क्लेदकृद्भवेत् ॥२॥
लिहेच्चूर्णं द्रवैः सर्वैर्घृताद्यैर्द्विगुणोन्मितैः ।
पिवेच्चतुर्गुणैरेव चूर्णमालोडितं द्रवैः ॥३॥
चूर्णावलेह-गुटिकाकल्कानामनुपानकम् ।
वातपित्तकफातङ्के त्रिद्व्येकपलमाहरेत् ॥४॥
यथा तैलं जले प्राप्तं क्षणेनैव प्रसर्पयेत् ।
अनुपानबलादङ्गे तथा सर्पति भेषजम् ॥५॥

द्रवेण यावतासम्यक्चूर्णं सर्व्वं प्लुतं भवेत् ।
भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः ॥६॥
आमलं चित्रकं पथ्या पिप्पली सैन्धवस्तथा ।
चूर्णितोऽयं गणो ज्ञेयः सर्व्वज्वरविनाशनः ॥७॥ [ चूर्णम्
भेदी रुचिकरः श्लेष्मजेताग्नदीपनपाचनः । आमलक्यादि-
मधुना पिप्पलीचूर्णं लिहेत्कासज्वरापहम् ॥८॥
हिक्काश्वासहरं कण्ठ्यं प्लीहघ्नं बालकोचितम् । मधुपिप्पली
एका हरीतकी योज्या द्वौ तु योज्यौ विभीतकौ ॥९॥
चत्वार्यामलकान्येव त्रिफलैषा प्रकीर्त्तिता ।
त्रिफला मेहशोथघ्नी नाशयेद्विषमज्वरान् ॥१०॥
दीपनी श्लेष्मपित्तघ्नी कुष्ठहन्त्री रसायनी ।
सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयान् जयेत्॥११॥इति त्रिफला ।
पिप्पली मरिचं शुण्ठीत्रिभिस्त्र्यूषणमुच्यते ।
दीपनं श्लेष्ममेदोघ्नं कुष्ठपीनस नाशनम् ॥१२॥
जयेदरोचकं सामं मेहगुल्मगलामयान् ।त्र्यूषणम्
पिप्पलीचव्य विश्वाह्वापिप्पली मूलचित्रकैः ॥१३॥
पञ्चकोल मिति ख्यातं रुच्यं पाचनदीपनम् ।
आनाहप्लीहगुल्मघ्नं शूलश्लेष्मोदरापहम् ॥१४॥पञ्चकोलम्
त्रिगन्धमेलात्वक् पत्रैश्चातुर्जातं सकेशरैः ।
त्रिगन्धं स चतुर्जातं रूक्षोष्णं लघुपित्तकृत् ॥१५॥ [जातकम्
वर्ण्यं रुचिकरन्तीक्ष्णं विषश्लेष्मामयान्जयेत् ।त्रिगन्ध चातु-
काकोली क्षीरकाकोली जीवकर्षभको तथा ॥१६॥
मेदा चान्या महामेदा जीवन्ती मधुकन्तथा ।

मुद्गपर्णी माषपर्णी जीवनीयोगणस्त्वयम् ॥१७॥
जीवनीय गणः स्वादुर्गर्भसन्धानकृद्गुरुः ।
स्तन्यकृद्वृंहणो वृष्यः स्निग्धः शीतस्तृषापहः ॥१८॥
रक्तपित्तं क्षयं शोथं ज्वरादाहानिलान् जयेत् । जीवनीयगणः
द्वे मेदे द्वे च काकोल्यौ जीवकर्षभकौ तथा ॥१९॥
ऋद्धिर्वृद्धी च तैः सर्व्वैरष्टवर्ग उदाहृतः ।
अष्टवर्गो बुधैः प्रोक्तो जीवनीयसमो गुणैः ॥२०॥ अष्टवर्गः
सिन्धु सौवर्च्चलञ्चैव विडं सामुद्रिकं गडम् ।
एकद्वित्रिचतुः पञ्चलवणानि क्रमाद्विदुः ॥२१॥
तेषु मुख्यं सैन्धवं स्याद्युक्ते तत्प्रयोजयेत् ।
सैन्धवाद्यं रोमकान्तं ज्ञेयं लवणपञ्चकम् ॥२२॥
मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम् । [पञ्चकम्
वीर्य्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम् ॥२३॥ लवण-
स्वर्जिकायावशूकश्च क्षारयुग्ममुदाहृतम् ।
ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥२४॥
क्षारास्त्वन्येऽपि गुल्मार्शोग्रहणीरुक्छिदः सराः ।
पाचनाः क्रिमिपुंस्त्वघ्नाः शर्कराश्मरिनाशनः ॥२५॥ क्षाराः
त्रिफला रजनीयुग्मं कण्टकारीयुगं सटी ।
त्रिकटुग्रन्थिकं मूर्वा गुडूचीधन्वयासकः ॥२६॥
कटुकीपर्पटीमुस्तं त्रायमाणञ्च बालकम् ।
निम्बः पुष्करमूलञ्च मधुयष्टीसवत्सकः ॥२७॥
यवानीन्द्रयवीभार्गी शिग्रुवीजं सुराष्ट्रजाः ।
वचात्वक्पद्मकोशीरं चन्दनातिविषावला ॥२८॥

शालिपर्णी पृष्टपर्णी विडङ्गं तगरस्तथा ।
चित्रको देवकाष्ठञ्च चव्यं पत्रं पटोलजम् ॥२९॥
जीवकर्षभकौ चैव लवङ्गं वंशलोचनम् ।
पुण्डरीकञ्च काकोली-पत्रजं जातिपत्रकम् ॥३०॥
तालीशपत्रञ्च तथा समभागानि चूर्णयेत् ।
सर्वचूर्णस्य चार्द्धांशङ्कैरातं निक्षिपेत्सुधीः ॥३१॥
एतत्सुदर्शनं नाम चूर्णं दोष-त्रयापहम् ।
ज्वरांश्च निखिलान् हन्यान्नात्रकार्या विचारणा ॥३२॥
पृथग्द्वन्द्वागन्तुकांश्च धातुस्थान् विषम ज्वरान् ।
सन्निपातोद्भवांश्चापि मानसानपि साधयेत् ॥३३॥
शीतज्वरैकाहिकादीन् मोहं तन्द्रां भ्रमं तृषाम् ।
श्वासं कासञ्च पाण्डुञ्च हृद्रोगं हन्ति कामलाम् ॥३४॥
त्रिक-पृष्ठ-कटी-जानु-पार्श्व-शूल-निवारणम् ।
शीताम्बुना पिवेद्धीमान् सर्व-ज्वर-निवृत्तये ॥३५॥
सुदर्शनं यथा चक्रं दानवानां विनाशनम् ।
तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम्॥३६[सुदर्शनचूर्णम्
कास-श्वास-ज्वर-हरी त्रिफला पिप्पली-युता ।
चूर्णिता मधुना लीढा भेदनी चाग्निबोधिनी ॥३७॥
कट्फलं मुस्तकं तिक्ता शटी शृङ्गीच पौष्करम् ।
चूर्णमेषाञ्च मधुना शृङ्गवेर-रसेन वा ॥३८॥
लिहेत् ज्वरहरं कण्ठ्यं कास श्वासारुचीर्जयेत् ।
वायुं छर्दिं तथा शूलं क्षयञ्चैव व्यपोहति३९कट्फलादिचूर्णम्
शृङ्गी प्रतिविषा कृष्णाचूर्णिता मधुना लिहेत् । [चूर्णम् ।

श्वास कास-ज्वर च्छर्दि शान्त्यै वा केवलां विषाम्॥४०॥शुण्ठ्यादि
शुण्ठी-प्रतिविषा-हिङ्गु-मुस्ता-कुटज-चित्रकैः।
चूर्णमुष्णाम्बुना पीतमामाती-सार-नाशनम् ॥४१॥
हरीतकी प्रतिविषा सिन्धु-सौवर्च्चलं वचा।
हिङ्गुश्चेतिकृतं चूर्णं पिवेदुष्णेन वारिणा ॥४२॥
आमातीसार-शमनं ग्राहिचाग्नि-प्रवोधनम्।
मुस्तमिन्द्रयवं विल्वं लोध्रं मोचरसन्तथा ॥४३॥
धातकीं चूर्णयेत्तक्र-गुडाभ्यां पाययेत् सुधीः।
सर्वातीसार-शमनं निरुणद्धि प्रवाहिकाम् ॥४४॥ [र्णम्
लघु गङ्गा धरं नाम चूर्णं संग्राहकं परम्। लघुगङ्गाधरचू-
मुस्ता-रलक-शुण्ठी भिर्धातकी लोध्र-वालकैः ॥४५॥
विल्व-मोचरसाभ्याञ्च पाठेन्द्रयव-वल्कलैः।
आम्र-वीजं प्रतिविषा लज्जालुरिति चूर्णकैः ॥४६॥
चौद्र-तण्डुल पानीय पीतैर्याति प्रवाहिका।
सर्व्वातीसार-ग्रहणी प्रशमं याति वेगतः ॥४७॥
वृद्ध-गङ्गा-धरं चूर्णं सरिद्वेगेऽपि वन्धकम्। वृद्धगङ्गाधर-चूर्णम्
तक्रेण यः पिवेन्नित्यं चूर्णं मरिच सम्भवम् ॥४८॥
चित्र-सौवर्चलोपेतं ग्रहणी तस्य नश्यति।
उदर प्लीह मन्दाग्निगुल्मार्शोनाशनं भवेत् ४९ मरिचाद्यंचूर्णम
अष्टौ भागाः कपित्थस्य षड्भागा शर्करा मता।
दाडिमं तिन्तिडीकञ्च श्रीफलं धातकी तथा ॥५०॥
अजमोदाच पिप्पल्यः प्रत्येकं स्युस्त्रिभागिकाः।
मरिचं जीरकं धान्यं ग्रन्थिकं वालकन्तथा ॥५१॥

सौवर्चलं यवानीच चातुर्जातं सचित्रकम् ।
नागरश्चैकभागाः स्युः प्रत्येकं सूक्ष्म-चूर्णिताः ॥५२॥
कपित्थाष्टकसंज्ञं स्याच्चूर्णमेतद्गलामयान् ।
अतीसारं क्षयंगुल्मं ग्रहणीञ्च व्यपोहति ।कपित्थाष्टक चूर्णम्
दाड़िमे द्विपले ग्राह्ये खण्डादष्टपलानिच ॥५३॥
त्रिगन्धस्य पलं चैकं त्रिकटोश्च पलत्रयम् ।
एतदेकीकृतं सर्वं चूर्णं स्याद्दाड़िमाष्टकम् ॥५४॥
रुचिकृद्दीपनं सर्य्यं ग्राहिकासज्वरापहम् । दाड़िमाष्टकम् ।
दाडिमस्य पलान्यष्टौ शर्करायाः पलाष्टकम् ॥५५॥
पिप्पली पिप्पली-मूलं यवानी मरिचन्तथा ।
धान्यकं जीरकं शुण्ठी प्रत्येकं पल-सम्मिता ॥५६॥
कर्ष-मात्रातुगाक्षीरीत्वक्पत्रैलाश्च केशरम् ।
प्रत्येकं कोलमात्रा स्युस्तच्चूर्णं दाडिमाष्टकम् ॥५७॥
अतीसारं क्षयं गुल्मं ग्रहणीञ्च गल ग्रहम् । [ माष्टकम् ।
मन्दाग्निं पीनसं कासं चूर्णमेतद्व्यपोहति ॥५८॥वृद्ध दाड़ि-
लवङ्गं शुद्धकर्पूर मेलात्वगनागकेसरम् ।
जातीफल मुशीरञ्चनागरं कृष्णजीरकम् ॥५९॥
कृष्णागुरुस्तुगाक्षीरी मांसी नीलोत्पलं कणा ।
चन्दनं तगरं बालं कंकोलञ्चेति चूर्णयेत् ॥६०॥
समभागानि सर्व्वाणि सर्वेभ्योर्द्धसिता भवेत् ।
लवङ्गाद्यमिदं चूर्णं राजार्हं वह्नि दीपनम् ॥६१॥
रोचनं तर्पणं हृद्यं त्रिदोषघ्नं वलप्रदम् ।
हृद्रोगं कण्ठरोगञ्च कासं हिक्काञ्च पीनसं ॥६२॥

यच्चाद्यं तमकंश्वासमतीसारमुरःचतं ।
प्रमेहा रुचि गुल्मादीन्ग्रहणी मपिनाशयेत् ६३लवङ्गाद्यं चूर्णम
जातीफलं लवङ्गैलापत्र त्वम्नागकेशरम् ।
कर्पूर चन्दन तिलै स्त्वकचीरीतगरामलैः ॥६४॥
तालीस पिप्पली पथ्या स्थूलजीरकचित्रकैः ।
शुण्ठीविडङ्गमरिचैः समभागविचूर्णितैः ॥६५॥
यावन्त्येतानि सर्वाणि कुर्य्याद्भङ्गाश्च तावतीम ।
सर्वचूर्णं समादेया शर्कराच भिषग्वरैः ॥६६॥
कर्षमात्रं ततः खादेन्मधुना प्लावितं सुधीः ।
अस्य प्रभावाद् ग्रहणीकासश्वासारुचिच्चयाः ॥६७॥
वातश्लेष्म प्रतिश्यायाः प्रशमं यान्ति वेगतः जातीफलाद्य चूर्णम्
मरिचं नागपुष्पाणि तालीसं लवणानिच ॥६८॥
प्रत्येकमेकभागाःस्युः पिप्पली मूलचित्रकैः ।
त्वक्कणातिन्तिडीकञ्च जीरकञ्च द्विभागकम् ॥६९॥
धान्याम्लवेतसौ विश्वभद्रैला वदराणिच ।
अजमोदा जलधरा प्रत्येकं स्युस्त्रिभागकाः ॥७०॥
सर्व्वौषधिचतुर्थांशं दाडिमस्य फलं भवेत् ।
द्रव्येभ्यो निखिलेभ्यश्च सितादेयाद्धमात्रया ॥७१
महाखाण्डवसंज्ञः स्याच्चूर्णमेतत्सुरोचनम् ।
अग्निदीप्तिकरं हृद्यं कासातीसार नाशनम् ॥७२॥
हृद्रोग कण्ठजठरं मुखरोग प्रणाशनम् ।
विसूचिकां तथाध्मान मर्शो गुल्मक्रिमीनपि ॥७३॥
छर्दिं पञ्चविधां श्वासं चूर्णमेतद्व्यपोहति।महाखाण्डवचूर्णम्

चित्रकं त्रिफलाव्योषं जीरकं हपुषा वचा ॥७४॥
यवानी पिप्पलीमूलं शतपुष्पाजगन्धिका ।
अजमोदा शटीधान्यं विडङ्गं स्थूलजीरकः ।
हेमाह्वापौष्करं मूलं क्षारौ लवणपञ्चकम् ॥७५॥
कुष्टञ्चेति समांशानि विशाला स्याद् द्विभागिका ।
त्रिवृत्त्रिभागा विज्ञेयादन्त्या भागत्रयं भवेत् ॥७६॥
चतुर्भागा सातला स्यात्सर्वाण्येकत्र चूर्णयेत् ।
पाचनस्नेहनाद्यैश्च स्निग्धकोष्टस्य देहिनः ॥७७॥
दद्याच्चूर्णं विरेकाय सर्व रोगप्रणाशनम् ।
हृद्रोगे पाण्डुरोगेच कासे श्वासे भगन्दरे ॥७८॥
मन्दाग्नौच ज्वरे कुष्ठे ग्रहण्याञ्च गलग्रहे ।
दद्याद्युक्तानुपानेन तथाश्माने सुरादिभिः ॥७९॥
गुल्मे वदरनीरेण विड्भङ्गे दधिमस्तुना ।
उष्णाम्बुभिरजीर्णेच वृक्षाम्लैः परिकर्त्तेषु ॥८०॥
उष्ट्रीदुग्धेनोदरेषु तथा तक्रेण वा गवाम् ।
प्रसन्नयावातरोगे दाडिमाम्भोभिरर्शसि ॥८१॥
द्विविधेच विषे दद्याद्घृतेन विषनाशनम् ।
चूर्णं नारायणं नाम दुष्ट रोग गणापहम् । नारायणचूर्णम्
हपुषा त्रिफलाचैव त्रायमानाच पिप्पली ॥८२॥
हैमवती त्रिवृच्चैव शातला कटुकावचा ।
नीलिनी सैन्धवं कृष्णालवणञ्चेति चूर्णयेत् ॥८३॥
उष्णोदकेन मूत्रेण दाडिम त्रिफलारसैः ।
तथा मांसरसेनापि यथायोग्यं पिवेन्नरः ॥८४॥

अजीर्णे प्लीहगुल्मेषु शोफार्शो विषमाग्निषु ।
हलीमका मलापाण्डु कुष्ठाध्मानो दरेष्वपि । हपुषाद्यं चूर्णम्
शुण्ठी हरीतकी कृष्णा त्वृत्सौवर्चलन्तथा ॥८५॥
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ।
ज्ञेयं पञ्चसमं चूर्णमेतच्छूलहरं परम् ॥८६॥
आध्मानजठरार्शोघ्नमामवातहरं स्मृतम् । शुण्ठाद्यं चूर्णम्
कर्षमात्रा भवेत् कृष्णा त्रिवृता स्यात्पलोन्मिता ॥८७॥
खण्डात्पलश्च विज्ञेयं चूर्णमेकत्र कारयेत् ।
कर्षोन्मितं लिहेदेतत्क्षौद्रेणाध्माननाशनम् ॥८८॥
गाढविट्कोदरकफान् पित्तं शूलानि नाशयेत् ।कृष्णाद्यंचूर्णम्
लवण त्रितयं क्षारौ शतपुष्पाद्वयं वचा ।
अजमोदाजगन्धाच हपुषाजीरक द्वयम् ॥८९॥
मरिचं पिप्पलीमूलं पिप्पली गजपिप्पली ।
हिङ्गुश्च हिङ्गुपत्रीच शठी पाठोपकुञ्चिका ॥९०॥
शुण्ठी चित्रकचव्यानि विडङ्गञ्चाम्लवेतसम् ।
दाडिमं तिन्तिडीकञ्च त्रिवृद्दन्ती शतावरी ॥९१॥
इन्द्र वारुणिका भार्गी देवदार्वयवानिका ।
कस्तुम्बुरु तुम्बुरूणि पौष्करं वदराणि च ॥९२॥
शिवाचेति समांशानां चूर्णमेकत्र कारयेत् ।
भावयेदाद्रकरसै र्वीजपूररसैस्तथा ॥९३॥
तत्पिवेत्सर्पिषा जीर्णमद्येनोष्णोदकेन वा ।
कोलाम्भसा वा तक्रेण दुग्धेनोष्ट्रेण मस्तुना ॥९४॥
यकृत्प्लीहकटीशूलगुदकुक्षिहृदामयान् ।
अर्शो विष्टम्भमन्दाग्नि गुल्मप्लीहोदराणि च ॥९५॥

हिक्काध्मानश्वासकासान् जयेदेतान्न संशयः । [व्यं चूर्णम्
एतैरेवौषधैः सम्यक् घृतं वा साधयेत्सुधीः ॥९६॥ त्रिलवणा-
तुम्बुरूणि त्रिलवणं यवानी पुष्कराह्वयम् ।
यवक्षाराऽभयाहिङ्गु विडङ्गानि समानि च ॥९७॥
त्रिवृत्त्रिभागा विज्ञेया सूक्ष्मचूर्णानि कारयेत् ।
पिबेदुष्णेन तोयेन यवक्वाथेन वा पिबेत् ॥९८॥
जयेत्सर्वाणि शूलानि गुल्माध्मानोदराणि च ।तुम्बराद्यं चूर्णं ।
चित्रको नागरं हिङ्गु पिप्पली पिप्पलीजटा ।।९९॥
चव्याजमोदमरिचं प्रत्येकं कर्षसम्मितम् ।
स्वर्जिकाच यवक्षारः सिन्धुसौवर्चलं विडम् ॥१००॥
सामुद्रिकं रोमकञ्च कोलमानानि कारयेत् ।
एकीकृत्याखिलं चूर्णं भावयेन्मातुलुङ्गजैः ॥१०१॥
रसैर्द्दाडिमजै र्वापि शोषयेदातपेन च ।
एतच्चूर्णं जयेद्गुल्मं ग्रहणीमामजां रुजम् ॥१०२॥
अग्निञ्च कुरुते दीप्तं रुचिश्लेष्मकनाशनम् । चित्रकाद्यं चूर्णम्
सैन्धवं पिप्पलीमूलं पिप्पली चव्यचित्रकम् ॥१०३॥
शुण्ठी हरीतकी चेति क्रमवृद्धानि चूर्णयेत् ।
वडवानलनामैतच्चूर्णं स्यादग्निदीपनम्॥१०४॥वडवानलचूर्णम्
अजमोदा विडङ्गानि सैन्धवं देवदारु च ।
चित्रकं पिप्पलीमूलं शतपुष्पा च पिप्पली ॥१०५॥
मरिचञ्चेतिकर्षांशं प्रत्येकं कारयेद् बुधः ।
कर्षास्तु पञ्च पथ्याया दशस्युर्वृद्धदारुकात् ॥१०६॥
नागराच्च दशैव स्युः सर्वाण्येकत्र चूर्णयेत् ।
पिबेत्कोष्णजलेनैतच्छ्वयथुं नाशयेत्ध्रुवम् ।।१०७॥

आमवातरुजं हन्ति सन्धिपीडां च गृध्रसीम्।
कटिपृष्ठगुदास्थाञ्च जङ्घयोश्च रुजं जयेत् ॥१०८॥
तूणीं प्रतूणीं विश्वाचीं कफवातामयान् जयेत्। [दाद्यं चूर्णम्
समेन वा गूड़ेनास्य वटकान् कारयेद् भिषक् ॥१०९॥ अजमो-
हिङ्गु पाठा भया धान्यं दाडिमं चित्रकः शठी।
अजमोदा त्रिकटुकं हपुषा चाम्लवेतसः।
अजगन्धा तिन्तिड़ीकं जीरकं पोष्करं वचा ॥११०॥
चव्यं चारद्वयं पञ्च लवणानि विचूर्णयेत्।
प्राग्भोजनस्य मध्ये वा चूर्णमेतत्प्रयोजयेत् ॥१११॥
पिबेद्वा जीर्णमद्येन तक्रेणोष्णोदकेन वा।
गुल्मे वातकफोद्भूते हृद्ग्रहे ष्ठीलिकासु च ॥११२॥
हृद्वस्तिपार्श्वशूलेषु शूले च गुदयोनिजे।
मूत्रकृच्छ्रे तथानाहे पाण्डुरोगेऽरुचौ तथा॥११३॥
हिक्कायां यकृति प्लीहश्वासे कासे गलग्रहे।
ग्रहण्यर्शोविकारेषु चूर्णमेतत् प्रशस्यते ॥११४॥
भावितं मातुलुङ्गस्य बहुशः स्वरसेन वा। [चूर्ण।
कुर्य्याच्च गुटिकां बद्धा वातश्लेष्महरा परा ॥११५॥ हिङ्ग्वाद्यं
यवानी दाडिमं शुण्ठी तिन्तिडीकाम्लवेतसौ।
वदराम्लञ्च कुर्व्वीत चतुःशाण मितानि च।
सार्द्धं द्विशाणं मरिचं पिप्पली दश शाणिका॥११६॥
त्वक् सौवर्चलधान्याक जीरकं द्विद्विशाणकम्।
चतुःषष्टिमितैः शाणैः शर्करामत्र योजयेत् ॥११७॥
चूर्णितं सर्व्वमेकत्र यवानीखाण्डवाभिधम्।
भुक्त्वा जयेत्पाण्डुरोगं हृद्रोगं ग्रहणीं ज्वरम् ॥११८॥

छर्दिंशोषातिसारांश्च प्लीहानाहविबन्धताम् । [ चूर्णम्
अरुचिं शूलमन्दाग्निमर्शांसि जिह्वा गलामयान् ।यवानीखाण्डवं
तालीसं मरिचं शुण्ठी पिप्पली वंशरोचनम ॥११९॥
एक-द्वि-त्रि-चतुः-पञ्च-कर्षैर्भागान् प्रकल्पयेत् ।
एलात्वचोस्तु कर्षार्द्धं प्रत्येकं भागमाचरेत् ॥१२०॥
द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः ।
तालीसाद्यमिदं चूर्णं रोचनं पाचनं स्मृतम् ॥१२१॥
कासश्वासज्वरहरं सर्व्वातीसारनाशनम् ।
शोषाध्मानहरं प्लीहग्रहणीपाण्डुरोगजित् ॥१२२॥कथ चूर्णं
पक्वा वा शर्करां चूर्णं क्षिपेत्स्याद् गुटिका ततः।तालीसाद्यंमोद
सितोपला षोडश स्या दष्टौ स्याद्वंशरोचनः ॥१२३॥
पिप्पली स्याच्चतुःकर्षा स्यादेला च द्विकर्षिका।
एकः कर्षस्त्वचः कार्य्यश्चूर्णयेत्सर्वमेकतः ॥१२४॥
सितोपलादिकं चूर्णं मधुसर्पियुतं लिहेत् ।
श्वासकासज्वरहरं हस्तपादाङ्गदाहजित् ॥१२५॥
मन्दाग्निं सुप्तजिह्वत्वं पार्श्वशूलमरोचकम् । चूर्णं ।
ज्वरमूर्द्धगतं रक्तं पित्तमाशु व्यपोहति ॥१२६॥सितोपलादि
सामुद्रलवणं कार्यमष्टकर्षमितं बुधैः ।
पञ्च सौवर्च्चलं ग्राह्यं विडसैन्धवधान्यकम् ॥१२७॥
पिपपली पिप्पलीमूलं कृष्णजीरकपत्रकम् ।
नागकेशर-तालीस-मम्लवेतसकंस्तथा ॥१२८॥
द्विकर्षमात्राण्येतानि प्रत्येकं कारयेद् बुधः ।
मरिचं जीरकं विश्वमेकैकं कर्षमात्रकम् ॥१२९॥
दाड़िमं स्याच्चतुः कर्षं त्वगेले चार्द्धकार्षके ।

एतच्चूर्णीकृतं सर्वं लवणं भास्कराभिधम् ॥१३०॥
माषप्रमाणं देयन्तु मस्तुतक्रसुरासवैः ।
वातश्लेष्मभवं गुल्मं प्लीहानमुदरक्षयम् ॥१३१॥
अर्शांसि ग्रहणीं कुष्ठं विबन्धञ्च भगन्दरम् ।
शोफं शूलं श्वासकासावामवातञ्च हृद्रुजम् ॥१३२॥
मन्दाग्निं नाशयेत्येव दीपनं पाचनं परम् । [लवणचूर्णम् ।
सर्वलोकहितार्थाय भास्करेणोदितं पुरा ॥१३३॥ भास्कर-
एलाप्रियङ्गुमुस्तानि कोलमज्जा च पिप्पली ।
श्रीचन्दनं तथा लाजा लवङ्गं नागकेशरम् ॥१३४॥
एतच्चूर्णीकृतं सर्वं सिताक्षौद्रयुतं लिहेत् ॥ [चूर्णम् ।
वातपित्तकफोद्भूतं छर्दिं हन्त्यतिवेगतः ॥१३५॥ एलादि-
मूलं पत्रं फलं पुष्पं त्वचं निम्बात्समाहरेत् ।
सूक्ष्मचूर्णमिदं कुर्य्यात्पलं पञ्चदशोन्मितम् ॥ १३६ ॥
लोहभस्महरीतक्यौ चक्रमर्दक-चित्रकौ ।
भल्लातकं विडङ्गानि शर्करामलकं निशा ॥१३७॥
पिप्पली मरिचं शुण्ठी वाकुचीकृतमालकः ।
गोक्षुरश्च पलोन्मानमेकैकं कारयेद् बुधः ॥१३८॥
सर्वमेकीकृतं चूर्णं भृङ्गराजेन भावयेत् ।
अष्टभागावशिष्टेन खदिरासनवारिणा ॥१३९॥
भावयित्वाच संशुष्कं कर्षमात्रं ततः पिबेत् ।
खदिरासनतोयेन सर्पिषा पयसेन वा ॥१४०॥
मासेन सर्वकुष्ठानि विनिहन्ति रसायनम् ।[चूर्णम् ।
पञ्चनिम्बमिदं चूर्णं सर्वरोगप्रणाशनम् ॥ १४१॥ पञ्चनिम्ब
शतावरी गोक्षुरश्च बीजञ्च कपिकच्छुजम् ।

गाङ्गेरुकी चातिवला बीजमिक्षुरकोद्भवम् ॥१४२॥
चूर्णितं सर्वमेकत्र गोदुग्धेन पिबेन्निशि । चूर्णम् ।
न तृप्तिं याति नारीभिर्नरश्चूर्णप्रभावतः ॥१४३॥ पुष्टिकरं
अश्वगन्धा दशपला तस्मार्त्री वृद्धदारुकः ।
चूर्णीकृत्योभयं विद्वान् घृतभाण्डे निधापयेत् ॥१४४॥
कर्षकं पयसा पीत्वा नारीभिर्नैव तृप्यति ।
अगत्वा प्रमदां भूयाद्बली पलित-वर्जितः ।अश्वगन्धादिचूर्णम्
चित्रक स्त्रिफला मुस्तं विडङ्गं त्र्यूषणानि च ॥१४५॥
समभागानि कार्य्याणि नवभागं हतायसः ।
एतदेकीकृतं चूर्णं मधुसर्पियुतं लिहेत् ॥१४६॥
गोमूत्रमथवा तक्रमनुपाने प्रशस्यते ।
पाण्डुरोगं जयत्युग्रं हृद्रोगञ्च भगन्दरम् ॥१४७॥
शोथकुष्ठोदरार्शांसि मन्दाग्निमरुचिं कृमीन् । नवायसंचूर्णम
आकारकरभः शुण्ठी कक्कोलं कुङ्कुमं कणा ॥१४८॥
जातीफलं लवङ्गञ्च चन्दनञ्चेति कार्षकान् ।
चुर्णानिमांस्ततः कुर्य्यादहिफेनं पलोन्मितम् ॥१४९॥
सर्वमेकीकृतं चूर्णं माषैकं मधुना लिहेत् ।
शुक्रस्तम्भ करं चूर्णं पुंसामानन्द कारकं ।
नारीणां प्रीतिजननं सेवेत निशिकामुकः१५०आकार करभादिः

---

## अथ सप्तमोऽध्यायः ।

वटका श्चाथ कथ्यन्ते तन्नाम गुटिका वटी ।
मोदको वटिका पिण्डी गुडो वर्त्तिस्तथोच्यते ॥१॥

लेहवत्साध्यते वह्नौ गुडो वा शर्करा शवा ।
गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी ॥ २ ॥
कुर्य्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटीम् ।
द्रवेण मधुना वापि गुटिकां कारयेद् बुधः ॥ ३ ॥
सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः ।
चूर्णाच्चूर्णसमः कार्य्यो गुग्गुलुर्मधु तत्समम् ॥ ४ ॥
द्रवञ्च द्विगुणं देयं मोदकेषु भिषग्वरैः ।
कर्षप्रमाणा तन्मात्रा बलं दृष्ट्वा प्रयुज्यते ॥ ५ ॥
इन्द्रवारुणिका मुस्तं शुण्ठी दन्ती हरितकी ।
त्रिवृत्शटी-विड़ङ्गानि गोक्षुर चित्रक स्तथा ॥ ६ ॥
तेजोह्वा च द्विकर्षाणि पृथग् द्रव्याणि कारयेत् ।
सूरणस्य पलान्यष्टौ वृद्धदारु चतुष्पलम् ॥ ७ ॥
चतुःपलं स्याद्भल्लातं क्वाथयेत्सर्व्वमेकतः ।
जलद्रोणे चतुर्थांशं गृह्णीयात्क्वाथ मुत्तमम् ॥ ८ ॥
क्वाथ्यद्रव्यात्त्रिगुणितं गुडं क्षिप्त्वा पुनः पचेत् ।
सम्यक् पक्वञ्च तं ज्ञात्वा चूर्णान्येतानि दापयेत् ॥ ९ ॥
चित्रकत्रिवृता दन्ती तेजोह्वाः पलिकाः पृथक् ।
पृथक् त्रिपलिकाः कार्य्या व्योषैलामरिचत्वचः ॥ १० ॥
निक्षिपेन्मधु शीते च तस्मिन् प्रस्थप्रमाणितम् ।
एवं सिद्धो भवेच्छ्रीमान् बाहुशालगुडः शुभः ॥ ११ ॥
जयेदर्शांसि सर्व्वाणि गुल्मं वातोदरन्तथा ।
आमवातप्रतिश्याय ग्रहणीक्षयपीनसान् ॥ १२ ॥
हलीमकं पाण्डुरोगं प्रमेहञ्च रसायनं । श्रीबाहुशालगुडः ।
मरिचं कर्षमात्रं स्यात्पिप्पल्योः कर्षसम्मितम् ॥ १३ ॥

चर्व्यकर्षो यवक्षारः कर्षयुग्मञ्च दाड़िमम् ।
एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुड़ेन हि ॥ १४ ॥
माषप्रमाणां गुटिकां कृत्वा वक्त्रे ऽवधारयेत् । [गुटिका ।
अस्याः प्रभावात्सर्वेऽपि कासा यान्त्येव संक्षयम्॥१५॥मरिचादि-
गुड़शुण्ठी-शिवामुस्तैर्धारयेद्गुटिकां मुखे । [गुटिका
श्वास-कासेषु सर्व्वेषु विभीतञ्चापि केवलकम् ॥१६॥ गुड़ादि-
आमलं कमलं कुष्ठं लाजाश्च वटरोहकम् ।
एतच्चूर्णस्य मधुना गुटिकां धारयेन्मुखे ॥ १७ ॥ [टिका
तृष्णां प्रवृद्धां हन्त्येषा मुखशोषञ्च दारुणम् । आमलकादिगु-
विड़ङ्गं नागरं कृष्णा पथ्या-मल-विभीतकौ ॥ १८ ॥
वचा गुडूची भल्लातं सद्विषं चात्र योजयेत् ।
एतानि समभागानि गोमूत्रेणैव पेषयेत् ॥ १९ ॥
गुञ्जाभा गुटिका कार्य्या दद्यादार्द्रकजै रसैः ।
एका मजीर्णयुक्तस्य द्वे विशूच्यां च दापयेत् ॥ २० ॥
तिस्रश्च सर्पदष्टस्य चतस्रः सन्निपातिके । [ गुटिका ।
गुटिका जीवनी नाम्नी सञ्जीवयति मानवम्॥२१॥ सञ्जीवनी
व्योषाम्लवेतसं चव्यं तालीसं चित्रकन्तथा ।
जीरकं तिन्तिड़ीकञ्च प्रत्येकं कर्ष भागिकम् ॥ २२ ॥
त्रिसुगन्धं त्रिशाणं स्याद्गुड़ः स्यात्कर्षविंशतिः ।
व्योषादिगुटिका सेयं पीनसश्वासकासजित् ॥ २३ ॥
रुचिस्वरकराख्याता प्रतिश्यायप्रणाशिनी ।व्योषादिगुटिका ।
आमेषु सगुड़ां शुण्ठीमजीर्णे गुड़पिप्पलीम् ॥ २४ ॥
शूले जीरगुडं दद्यादर्शःसु सगुड़ाभयाम् ।

आमाजीर्णादौ गुटिका चतुष्टयमाह

वृद्ध-दारकभल्लातशुण्ठीचूर्णेन योजितः ॥ २५ ॥ [ मोदकः
मोदकः सगुड़ो हन्यात् षड्विधार्शःकृतं रुजम् ।वृद्धदारक-
शुष्कसूरण-चूर्णस्य भागान् द्वात्रिंशदाहरेत् ॥ २६ ॥
भागान् षोड़श-चित्रस्य शुण्ठ्या भागचतुष्टयम् ।
द्वौ भागौ मरिचस्यापि सर्व्वाण्येकत्र चूर्णयेत् ॥ २७ ॥
गुडेन पिण्डिकां कुर्य्यादर्शसां नाशनं परम् ।सूरणपिण्डी ।
सूरणो वृद्धदारश्च भागैः षोड़शभिः पृथक् ॥ २८ ॥
मुशली-चित्रकौ ज्ञेया वष्टभागमितौ पृथक ।
शिवा विभीतकी धात्री विड़ङ्गं नागरं कणा ॥ २९ ॥
भल्लातः पिप्पलीमूलं तालीसञ्च पृथक् पृथक् ।
चतुर्भाग-प्रमाणानि त्वगेला मरिचन्तथा ॥३०॥
द्विभागमात्राणि पृथक् ततस्त्वेकत्र चूर्णयेत् ।
द्विगुणेन गुडेनाथ वटकान् कारयेद् बुधः ॥ ३१ ॥
प्रबलाग्निकारा एते तथार्शो-नाशनाः पराः ।
ग्रहणीं वातकफजां श्वासं कासं क्षयामयम् ॥ ३२ ॥
प्लीहानं श्लीपदं शोथं हिक्कां मेहं भगन्दरम् ।
निहन्ति पलितं वृष्या तथा मेध्या रसायनी । सूरणवटकः ।
त्रिफला त्र्यूषणं चव्यं पिप्पलीमूलचित्रकौ ॥ ३३ ॥
दारु माक्षिकधातु स्त्वक् दार्व्वीमुस्तं विडङ्गकम् ।
प्रत्येकं कर्षमात्राणि सर्वं द्विगुणितं तदा ॥३४॥
मण्डूरं चूर्णयेच्छुद्धं गोमूत्रेऽष्टगुणे क्षिपेत् ।
पश्चाच वटकान् कृत्वा दद्यात्तत्रानुपानतः ॥३५॥
कामलापाण्डुमेहार्शाः शोथ-कुष्ठ-कफामयान् ।
ऊरुस्तम्भमजीर्णञ्च प्लीहानं नाशयन्तिच॥ ३६॥मण्डूरवटकः

चन्द्रप्रभा वचा मुस्ता भूनिम्बाऽमरदारुकम् ।
हरिद्रा ऽतिविषा दार्व्वी पिप्पलीमूल चित्रकम् ॥३७॥
धान्यकं त्रिफलाचव्यं विडङ्गं गजपिप्पली ।
व्योषं माक्षिकधातुश्च द्वौ चारौ लवणत्रयम् ॥३८॥
एतानि शाणमात्राणि प्रत्येकं कारयेद् बुधः ।
त्रिवृद्दन्तीपत्रकं च त्वगेला वंशलोचना ॥३९॥
प्रत्येकं कर्षमात्राणि कुर्य्यादेतानि बुद्धिमान् ।
द्विकर्षं हतलोहं स्यात् चतुष्कर्षा सिता भवेत् ॥४०॥
शिला-जत्व-ष्टकर्षं स्यादष्टौ कर्षाश्च गुग्गुलोः ।
एभि रेकत्र संक्षुसैः कर्त्तव्या गुटिका शुभा ॥४१॥
चन्द्रप्रभेतिविख्याता सर्व्वरोग-प्रणाशिनी ।
प्रमेहं विंशतिः कृच्छ्रं मूत्राघातं तथाश्मरीम् ॥४२॥
विबन्धानाहशूलानि मेहनं ग्रन्थमर्व्वुदम् ।
अन्त्रवृद्धिं तथापाण्डुं कामलाश्च हलीमकम् ॥४३॥
अण्डवृद्धिं कटीशूलं श्वासं कासं विचर्च्चिकाम् ।
कुष्ठान्यर्शांसि कण्डुञ्च प्लीहोदरभगन्दरम् ॥४४॥
दन्तरोगं नेत्ररोगं स्त्रीणामार्त्तवजां रुजम् ।
पुंसां शुक्रगतान् रोगान्मन्दाग्नि मरुचिन्तथा ॥४५॥
वातपित्तकफं हन्या हल्या वृष्या रसायनी । [गुटिका ।
चन्द्रप्रभायां कर्षस्तु चतुःशाणं विधीयते ॥४६॥ चन्द्रप्रभादि
यवानी जीरकं धान्यं मरिचं गिरिकर्णिका ।
अजमोदापकुञ्ची च चतुःशाणापृथक् पृथक् ॥४७॥
हिङ्गु षट् शाणिकं कार्य्यं चारौ लवणपञ्चकम् ।
त्रिवृताष्टमितैः शाणैः प्रत्येकं कल्पयेत् सुधीः ॥४८॥

दन्ती शटी पौष्करञ्च विडङ्गं दाडिमं शिवा ।
चित्रोऽम्लवेतसः शुण्ठीशाणैः षोडशभिः पृथक् ॥४९॥
बीजपूर-रसेनैषां गुटिकां कारयेद् बुधः ।
घृतेन पयसा मद्यै रक्ते रुष्णोदकेन वा ॥५०॥
पिबेत् काङ्कायनप्रोक्तां गुटिकां गुल्मनाशिनीम् ।
मद्येन वातिकं गुल्मं गोक्षीरेण च पैत्तिकं ॥५१॥
मूत्रेण कफगुल्मञ्च दशमूलैस्त्रिदोषजम् ।
उष्ट्रीदुग्धेन नारीणां रक्तगुल्मं निवारयेत् ॥५२॥
हृद्रोगं ग्रहणीं शूलं क्रिमीनर्शांसि नाशयेत् ।काङ्कायनगुटिका।
नागरं पिप्पलीमूलं पिप्पली-चव्यचित्रकौ ॥५३॥
भृष्टं हिङ्ग्वजमोदाच सर्षपा जीरकद्वयम् ।
रेणुकेन्द्रयवा पाठा विडङ्गं गजपिप्पली ॥५४॥
कटुकातिविषा भार्गी वचामूर्वेति भागतः ।
प्रत्येकं शाणिकानि स्युर्द्रव्याणीमानि विंशतिः ॥५५॥
द्रव्येभ्यः सकलेभ्यश्च त्रिफला चिगुणा भवेत् ॥
एभिश्चूर्णी कृतैः सर्वैः समो देयश्च गुग्गुलुः ॥५६॥
वङ्गं रौप्यं च नागश्च लोहसारस्तथाभ्रकम् ।
मण्डूरं रससिन्दूरं प्रत्येकं पलसम्मितम् ॥५७॥
गुडपाकसमं कृत्वा इमं दद्याद्यथोचितम् ।
एकपिण्डं ततः कृत्वा धारयेद् घृतभाजने ॥५८॥
गुटिका शाणमात्रा तु कल्वा ग्राह्या यथोचिता ।
गुग्गुलुर्योगराजोऽयं त्रिदोषघ्नो रसायनः ॥५९॥
मैथुनाहारपानानां त्यागो नैवात्र विद्यते ।
सर्वान् वातमयान् कुष्ठानर्शांसि ग्रहणीगदम् ॥६०॥

प्रमेहं वातरक्तञ्च नाभिशूलं भगन्दरम्।
उदावर्त्तं क्षयं गुल्म मपस्मार मुरोग्रहम् ॥६१॥
मन्दाग्निं श्वासकासञ्च नाशये दरुचिन्तथा।
रेतोदोषहरः पुंसां रजोदोषहरः स्त्रियाम् ॥६२॥
पुंसा मपत्यजनको वन्ध्यानां गर्भदस्तथा।
रास्नादिक्वाथ संयुक्तो विविधं हन्तिमारुतम् ॥६३॥
काकोल्यादिशृतात् पित्तं कफमारग्वधादिना।
दार्व्वीशृतेन मेहांश्च गोमूत्रेण च पाण्डुताम् ॥६४॥
मेदोवृद्धिञ्च मधुना कुष्ठं निम्बशृतेन च।
छिन्नां क्वाथेन वातास्रं शोथं मूलकजातशृ तात् ॥६५॥
पाटलाक्वाथ-सहितो विषं मूषकजं जयेत्।
त्रिफलाक्वाथ-सहितो नेत्रार्त्तिं हन्ति दारुणाम् ॥६६॥
पुनर्नवादिक्वाथेन हन्यात्सर्व्वोदराण्यपि। योगराजगुग्गुलुः।
त्रिफलाया स्त्रयः प्रस्थाः प्रस्थैकममृता भवेत् ॥६७॥
संक्षुद्य लोहपात्रेण सार्द्धद्रोणाम्बुना पचेत्।
जलमर्द्धशृतं ज्ञात्वा गृह्णीया द्वस्त्रगालितम् ॥६८॥
ततः क्वाथे क्षिपेच्छुद्धं गुग्गुलुं प्रस्थसम्मितम्।
पुनःपचेदयःपात्रे द्रव्यान् संघर्षयेन्मुहुः ॥६९॥
सान्द्रीभूतं च तं ज्ञात्वा गुडपाकसमाकृतिः।
चूर्णीकृत्य ततस्तत्र द्रव्याणी-मानि निक्षिपेत् ॥७०॥
त्रिफला द्विपला ज्ञेया गुडूची पलिका मता।
षडक्षं त्र्यूषणं प्रोक्तं विडङ्गानां पलार्द्धकम् ॥७१॥
दन्ती कर्षमिता कार्य्या त्रिवृत्कर्षमिता स्मृता।
ततः पिण्डीकृतं सर्व्वं घृतपात्रे विनिक्षिपेत् ॥७२॥

गुटिकां शाणमात्रेण युञ्ज्याद्दोषाद्यपेक्षया।
अनुपाने भिषग् दद्यात् कोष्णं नीरं पयोऽथवा ॥७३॥
मञ्जिष्ठादिशृतं वापि युक्तियुक्तं ततः परम्।
जयेत्सर्वाणि कुष्ठानि वातरक्तं त्रिदोषजम् ॥७४॥
सव्रणानि गुल्मांश्च प्रमेहपिडकास्तथा।
प्रमेहोदर मन्दाग्निं कासं क्षयथुपाण्डुताम् ॥७५॥
निहन्ति चामयान् सर्वान् उपयुक्तो रसायनः।
कैशोरिकाभिधानोऽयं गुग्गुलुः कान्तिकारकः ॥७६॥
वासादिना नेत्रगदान् गुल्मादीन् वरुणादिना।
क्वाथेन खदिरस्यापि व्रणकुष्ठानि नाशयेत् ॥७७॥
अम्लं तीक्ष्णमजीर्णञ्च व्यायामं श्रममातपम्।
मद्यं रोषं त्यजेत्सम्यग् गुणार्थी पुरसेवकः ७८ कैशोरगुग्गुलुः
त्रिपलं त्रिफलाचूर्णं कृष्णाचूर्णं पलोन्मितम्।
गुग्गुलुं पञ्चपलिकं क्षोदयेत् सर्वमेकतः ॥७९॥
ततस्तु गुटिकां कृत्वा प्रयुञ्ज्याद्वह्न्यपेक्षया। [गुग्गुलुः।
भगन्दरं गुल्मशोथा-वर्शांसि च विनाशयेत् ॥८०॥ त्रिफला
अष्टाविंशति संख्यानि पलान्यानीय गोक्षुरोः।
विपचेत् षड्गुणे नीरे क्वाथो ग्राह्योऽर्द्धशेषतः ॥८१॥
ततः पुनः पचेत्तत्र पुरं सप्तपलं क्षिपेत्।
गुडपाकसमाकारं ज्ञात्वा तं तत्र निक्षिपेत् ॥८२॥
त्रिकटु त्रिफला मुस्तं चूर्णितं पलसप्तकम्।
ततः पिण्डीकृतस्यास्य गुटिका मुख्ययोजिता।
हन्यात् प्रमेहं कृच्छ्रञ्च प्रदरं मूत्रघातकम् ॥८३॥
वातास्रं वातरोगांश्च शुक्रदोषं तथाश्मरीम्। गोक्षुरादिगुग्गुलुः

त्रिफलाष्टपलं कार्यं भल्लातञ्च चतुष्पलम् ॥८४॥
वाकुची पञ्च पलिका विडङ्गानां चतुः पलं ।
हतं लौहं तिन्त्रचैव गुग्गुलुश्च शिलाजतु ॥८५॥
एकैकं पलमात्रं स्यात्पलाष्टं पौष्करं भवेत् ।
चित्रकस्य पलार्द्धं स्याद्द्विमाषं मरिचं भवेत् ॥८६॥
नागरं पिप्पलीमुस्तं त्वगेलापत्र कुङ्कुमम् ।
शाणोन्मितं स्यादेकैकं चूर्णयेत्सर्वमेकतः ॥८७॥
ततस्तत्क्षिपेच्च वाँ पक्वखण्डे च तत्समे ।
मोदकान् पलिकान् कृत्वा प्रयुञ्जीत यथोचितम् ॥८८॥
हन्यात् सर्वाणि कुष्ठानि त्रिदोष प्रभवामयान् ।
भगन्दर-प्लीह-गुल्मान् जिह्वातालुगलामयान् ॥८९॥
शिरोऽक्षिप्रगतान् रोगानन्यान् पृष्ठगदानपि ।
प्राग्भोजनस्य देयं स्या दधःकायस्थिते गदे ॥९०॥
भिषजं भक्तमध्ये च रोगी जठरसंस्थिते ।
भोजनस्योपरि ग्राह्य मूर्द्धजत्रु गदेषु च॥९१॥त्रिफलामोदकः
काञ्चनारत्वचो ग्राह्यं पलविंशतिकं बुधैः ।
त्रिकटु द्वादश-पलं त्रिफला षट्-पला भवेत् ॥९२॥
पलैको वरुणः काथ्य एलात्वक्पत्रजन्तथा ।
एकैकं कर्षमात्रं स्यात्सर्वाण्येकत्र चूर्णयेत् ॥९३॥
यावच्चूर्णमिदं सर्वं तावन्मात्रस्तु गुग्गुलुः ।
सङ्कुट्य सर्व मेकत्र पिण्डं कृत्वा च धारयेत् ॥९४॥
गुटिकाः शाणिकाः कृत्वा प्रातर्ग्राह्या यथोचिता ॥
गण्डमालां जयत्युग्रामपचीमर्बुदानि च ॥९५॥
ग्रन्थीन् व्रणानि गुल्मांश्च कुष्ठानि च भगन्दरम् ।

प्रदेय चानुपानार्थं क्वाथो कुष्ठितिकाभवः ॥९६॥ [गुम्मु ख.॥

क्वाथः खदिरसारस्य पथ्या-क्वाथोऽथ चोषकम् । कृष्णाल-

निस्तुषं माषचूर्णं स्यात्तथा गोधूम-सम्भवम् ॥९७॥

निस्तुषं यवचूर्णञ्च शालितण्डुलकंस्तथा ।

सूक्ष्मञ्च पिप्पलीचूर्णं पलिकान्युपकल्पयेत् ॥९८॥

एतदेकीकृतं सर्वं भर्ज्जयेद्गोघृतेन च ।

अर्द्धमात्रे च सर्वेभ्य स्ततः खण्डसमं चिपेत् ॥९९॥

जलञ्च द्विगुणं दत्वा पाचयेत्तं शनैः शनैः ।

ततः पक्वं समुद्धृत्य कृत्वा कुर्वीत मोदकान् ॥१००॥

भुक्त्वा सायं पलैकञ्च पिबेत्चीरं चतुर्गुणम् ।

वर्जनीयौ विशेषेण चाराम्लौ द्वौ रसावपि ॥१०१॥

कृत्वैवं रमयेन्नारीं शक्तिं न चीयते नरः । माषादिमोदकः ।

---

अथ अष्टमोऽध्यायः ।

क्वाथस्य स्यात्पुनः पाकाद्घनत्वं सा रसक्रिया ।

सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात् पलोन्मिता ॥१॥

सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः ।

द्रवं चतुर्गुणं दद्यादिति सर्व्वत्र निश्चयः ॥२॥

सुपक्वे तन्तुमत्त्वे स्यादवलेहेसु मज्जनम् ।

स्थिरत्वं पीडिते मुद्रागन्धवर्णरसोद्भवः ॥३॥

दुग्धमिक्षुरसं यूषं पञ्चमूलकषायजम् ।

वासाक्वाथं यथायोग्य मनुपानं प्रशस्यते ॥४॥

कण्टकारीतुला नीरे द्रोणे पक्वा कषायकम् ।

पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ॥५॥

पृथक् पलांशान्येतानि गुडूचीचव्यचित्रकाः ।
मुस्तं कर्कटशृङ्गी च त्रूषणं धन्वयासकः ॥६॥
भार्गी रास्ना शटी चैव शर्करा पलविंशतिः ।
प्रत्येकञ्च पलान्यष्टौ प्रदद्याद् घृततैलयोः ॥७॥
पक्वा लेहत्वमानीय शीतं मधुपलाष्टकम् ।
चतुष्पलं तुगाक्षीरं पिप्पलीनां चतुष्पलम् ॥८॥
क्षिप्त्वा निदध्यात् सुदृढ़े मृण्मये भाजने शुभे । [वलेहः ।
लेहोऽयं हन्ति हिक्कार्त्तिं श्वासकासानशेषतः॥९॥कण्टकार्य्य-
पाटलाऽरणिकाश्मर्य्यौविल्वारलुकगोक्षुराः ।
पर्ण्यौ वृहत्यौ पिप्पल्यः शृङ्गी द्राक्षामृताभया ॥१०॥
वलाभूम्यामलीवासा ऋद्धी जीवन्तिका शटी ।
जीवकर्षभकौ मुस्तं पौष्करं काकनासिका ॥११॥
मुद्गपर्णी माषपर्णी विदारीच पुनर्नवा ।
काकोल्यौ कमलं मेदे सूक्ष्मैलागुरु-चन्दनम् ॥१२॥
एकैकं पलसम्मानं स्थूल चूर्णित मौषधम् ।
एकीकृत्य महत्पात्रे पञ्चामलशतानि च ॥१३॥
पचेद् द्रोणजलं क्षिप्त्वाग्राह्य मष्टावशेषितम् ।
ततस्तु तान्यामलानि निष्कुलीकृत्य वाससा ॥१४॥
दृढ़हस्तेन संपीड्य क्षिप्त्वा तत्र ततो घृतम् ।
पलसप्तमितं तानि किञ्चिद् भृष्टाल्पवह्निना ॥१५॥
ततस्तत्र क्षिपेत् क्वाथं खण्डस्याद्ध-पलोन्मितम् ।
लेहवत्साधयित्वाच चूर्णानीमानि दापयेत् ॥१६॥
पिप्पली द्विपला देया तुगाक्षीरी चतुष्पला ।
प्रत्येकं च त्रिशाणं स्यात्त्वगेलापत्रकेशरम् ॥१७॥

ततस्त्वेकी-कृते तस्मिन् क्षिपेत् क्षौद्रञ्च षट्पलम् ।
इत्येतच्यवनप्रोक्तं च्यवन-प्राश-संज्ञितम् ॥१८॥
लेहं वह्निवलं दृष्ट्वा खादेत् क्षीणो रसायनम् ।
बालवृद्धाः क्षतक्षीणा नारीक्षीणाश्च शोषिणः ॥१९॥
हृद्रोगिणः स्वरक्षीणाः ये नरा स्तेषु युज्यते ।
कासं श्वासं पिपासाञ्च वातास्त्रमुरसोग्रहम् ॥२०॥
वात-पित्तं शुक्रदोषं मूत्रदोषञ्च नाशयेत् ।
मेधां स्मृतिं स्त्रीषु हर्षं कान्तिं वर्णप्रसन्नताम् ॥२१॥
अस्यो-पयोगादाप्नोति नरो जीर्णविवर्जितः । च्यवनप्राशावलेहः
निष्कुलीकृत्य कुष्माण्ड-खण्डामलशतं पचेत् ॥२२॥
निक्षिप्य द्विगुणं नीरं अर्द्धशिष्टञ्च गृह्यते ।
तानि कुष्माण्डखण्डानि पीडयेद् दृढवाससा ॥२३॥
आतपे शोषयेत्किञ्चित् क्षुल्लायैर्बहुशो व्यधेत् ।
क्षिप्त्वा ताम्रकटाहे च दद्यादष्टपलं घृतम् ॥२४॥
तेन किञ्चिद्भर्जयित्वा पूर्व्वोक्तञ्च जलं क्षिपेत् ।
खण्डात्पलशतं दत्त्वा सर्व्वमेकत्र पाचयेत् ॥२५॥
सुपक्वे पिप्पली शुण्ठी जीरकाणां द्विपले पृथक् ।
पृथक् पलार्द्धं धान्याकं पत्रैला मरिचं त्वचम् ॥२६॥
चूर्णीकृत्य क्षिपेत्तत्र घृतार्द्धं क्षौद्रमावपेत् ।
खादेदग्निवलं दृष्ट्वा रक्तपित्ती ज्वरी क्षयी ॥२७॥
शोषतृष्णाभ्रमच्छर्दिश्वासकासक्षतातुरः ।
कुष्माण्डकावलेहोऽयं बालवृद्धेषु युज्यते ॥२८॥
उरःसन्धानकृद् वृष्यो वृंहणो बलकृन्मतः । कुष्माण्डकावलेहः
युक्त्या कुष्माण्डखण्डस्य कल्कं विपचेत्सुधीः ॥२९॥

अर्शसां मूढ़वातानां मन्दाग्नीनाञ्च युज्यते। अगस्त्यहरीतक्यावलेहः
हरीतकी शतं भद्रं यवानामाढकन्तथा ॥३०॥
पलानि दशमूलस्य विंशतिञ्च नियोजयेत्।
चित्रकः पिप्पलीमूलमपामार्गः शटी तथा ॥३१॥
कपिकच्छुः शङ्खपुष्पी भार्गी च गजपिप्पली।
बलापुष्करमूलञ्च पृथग्द्विपलमात्रया ॥३२॥
पञ्चेऽप्यष्टाढके नीरे यवैः स्विन्नैः शृतं नयेत्।
तत्राभयाशतं दद्यात् क्वाथे तस्मिन् विचक्षणः ॥३३॥
सर्पिस्तैलाष्टपलकं क्षिपेद्गुडतुलान्तथा।
पक्वा लेहत्वमानीय सिद्धे शीते पृथक् पृथक् ॥३४॥
क्षौद्रञ्च पिप्पलीचूर्णं दद्यात् कुडवमात्रया।
हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः ॥३५॥
क्षयं कासं ज्वरं श्वासं हिक्कार्शोरुचि पीनसान्।
ग्रहणीं नाशयेदेष वलीपलितनाशनः ॥३६॥
बलवर्णकरः पुंसामवलेहो रसायनः। [हरीतकी।
विहितोऽगस्त्यमुनिना सर्वरोग प्रणाशनः ॥३७॥ अगस्त्य-
कुटज-त्वक्तुलां द्रोणे जलस्य विपचेत् सुधीः।
कषायं पादशेषञ्च गृह्णीया द्वस्त्रगालितम् ॥३८॥
त्रिंशत्पलं गुडस्यात्र दत्त्वा च विपचेत्पुनः।
सान्द्रत्वमागतं दृष्ट्वा चूर्णानीमानि दापयेत् ॥३९॥
रसाञ्जनं मोचरसं त्रिकटु त्रिफला तथा।
लज्जालु चित्रकं पाठा विल्वमिन्द्र-यवं वचा ॥४०॥
भल्लातकं प्रतिविषं विडङ्गानिच वालकम्।
प्रत्येकं पलसम्मानं घृतस्य कुडवन्तथा। ॥४१॥

सिद्धशीते ततो दद्यात् मधुनः कुड़वं तथा ।
जयेदेषोऽवलेहस्तु सर्वाण्यर्शांसि वेगतः ॥४२॥
दुर्नामप्रभवान् रोगानतीसार मरोचकम् ।
ग्रहणीं पाण्डुरोगञ्च रक्तपित्तञ्च कामलाम् ॥४३॥
अम्लपित्तं तथा शोथं कार्श्यञ्चैव प्रवाहिकाम् ।
अनुपाने प्रयोक्तव्यमाज्यं तक्रं पयो दधि ॥४४॥
घृतं जलं वा जीर्णे च पथ्यभोजी भवेन्नरः । कुटजाद्योऽवलेहः
कुटजत्वक् तुलामर्द्धं द्रोणनीरे विपाचयेत् ॥४५॥
पादशेषशृतं नीत्वा चूर्णान्येतानि दापयेत् ।
लज्जालुधातुकी विल्वं पाठामोचरसस्तथा ॥४६॥
मुस्तं प्रतिविषा चैव प्रत्येकं स्यात्पलं पलम् ।
ततस्तु विपचेद्भूयो यावद्दार्व्वी प्रलेपनम् ॥४७॥
जलेन छागदुग्धेन पीतो मण्डेन वा जयेत् ।
सर्व्वातिसारान् घोरांश्च नानावर्णान् सवेदनान् ॥४८॥ [वलेहः।
असृग्दरं समस्तञ्च सर्व्वाशांसि प्रवाहिकाम् ।कुटजाष्टका-

---

अथ नवमोऽध्यायः ।

कल्काच्चतुर्गुणीकृत्य घृतं वा तैलमेव च
चतुर्गुणे द्रवे साध्यं तस्य माता पलोन्मिता ।
निक्षिप्य क्वाथयेत्तोयं क्वाथ्य-द्रव्याच्चतुर्गुणम् ॥१॥
पादशिष्टं गृहीत्वा च स्नेहं तेनैव साधयेत् ।
चतुर्गुणं मृदुद्रव्ये कठिनेऽष्टगुणं जलम् ॥२॥
अत्यन्तकठिने द्रव्ये नीरं षोड़शकं मतम् ।

तथाच मध्यमे द्रव्ये दद्यादष्टगुणं पयः ॥३॥
कर्षादितः पलं यावत् क्षिपेत् षोडशिकं जलम् ।
तदूर्द्ध्वं कुडवं यावद्भवेदष्टगुणं जलं ॥४॥
प्रस्थादितः क्षिपेन्नीरं खारीं यावच्चतुर्गुणम् ।
अम्बुक्वाथरसैर्यत्र पृथक् स्नेहस्य साधनम् ॥५॥
कल्कस्यांशं तत्र दद्याच्चतुर्थं षष्ठमष्टमम् ।
दुग्धे दधिरसे तक्रे कल्को देयोऽष्टमांशकः ॥६॥
कल्कस्य सम्यक्पाकार्थं तोयमत्र चतुर्गुणम् ।
द्रवाणि यत्र स्नेहेषु पञ्चादीनि भवन्ति हि ॥७॥
तत्र स्नेहसमान्याहुर्यथापूर्व्वं चतुर्गुणम् ।
द्रवेण केवलेनैव स्नेहपाको भवेद्यदि ॥८॥
तत्राम्बुपिष्टः कल्कः स्याज्जलञ्चात्र चतुर्गुणम् ।
क्वाथेन केवलेनैव पाको यत्रेरितः क्वचित् ॥९॥
क्वाथ्यद्रव्यस्य कल्कोऽपि तत्र स्नेहे प्रयुज्यते ।
कल्कहीनस्तु यः स्नेहः स साध्यः केवले द्रवे ॥१०॥
पुष्पकल्कस्तु यः स्नेहस्तत्र तोयं चतुर्गुणम् ।
स्नेहात् स्नेहाष्टमांशश्च पुष्पकल्कः प्रयुज्यते ॥११॥
वर्त्तिवत् स्नेहकल्कः स्याद्यदाङ्गुल्या विमर्द्दितः ।
शब्दहीनोऽग्नि-निक्षिप्तः स्नेहसिद्धो भवेत्तदा ॥१२॥
यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि ।
गन्ध-वर्ण-रसोत्पत्तिः स्नेहसिद्धिस्तदा भवेत् ॥१३॥
स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ।
ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् ।
मध्यपाकस्य सिद्धिश्च कल्के नीरसकोमले ॥१४॥

ईषत्काठिनकल्कश्च स्नेहपाको भवेत् खर: ।
तदूर्द्धं दग्धपाक: स्याद्दाहकृद्विषप्रयोजन: ॥१५॥
आमपाकश्च निर्वीर्य्यो वह्निमान्द्यकरो गुरु: ।
नस्यार्थं स्यान्मृदु: पाको मध्यम: सर्व्वकर्मसु ॥१६॥
अभ्यङ्गार्थं खर: प्रोक्तो युञ्ज्यादेवं यथोचितम् ।
घृततैलगुडादींश्च साधयेन्नैकवासरे ॥१७॥
प्रकुर्व्वन्त्युषिता ह्येते विशेषाद्गुणसञ्चयम् ।
पिप्पलीपिप्पलीमूलं चव्यचित्रकनागरै: ॥१८॥
ससैन्धवैश्च पलिकैर्घृतप्रस्थं विपाचयेत् ।
क्षीरं चतुर्गुणं दत्त्वा तत्घृतं प्लीहनाशनम् ॥१९॥
विषमज्वरमन्दाग्निहरं रुचिकरं परम् । षट्पलं घृतं ।
पिप्पली पिप्पलीमूलं चित्रको-हस्तिपिप्पली ॥२०॥
श्वदंष्ट्रानागरं धान्यं पाठाविल्वं यवानिका ।
द्रव्यैश्च पलकैरेतैश्चतु:षष्टिपलं घृतम् ॥२१॥
घृताच्चतुर्गुणं देयं चाङ्गेरीस्वरसं बुधै: ।
तथा चतुर्गुणं दत्त्वा दधिसर्पिर्विपाचयेत् ॥२२॥
शनै: शनैर्विपक्तव्यं चाङ्गेरीघृतमुत्तमम् ।
तत् घृतं कफवातघ्नं ग्रहण्यर्शोविकारनुत् ॥२३॥
हृत्स्थानाहगुदभ्रंशं मूत्रकृच्छ्रं प्रवाहिकाम् । चाङ्गेरीघृतं ।
मसुराणां पलशतं नीरद्रोणे विपाचयेत् ॥२४॥
पादशेषं शृतं नीत्वा दत्त्वा विल्वपलाष्टकम् ।
घृतप्रस्थं पचेत्तेन सर्व्वातीसारनाशनम् ॥२५॥
ग्रहणीभिन्नविट्कञ्च नाशयेच्च प्रवाहिकाम् । मसूराद्यं घृतं ।
अश्वगन्धा पलशतं तदर्द्धं गोक्षुरं मतम् ॥२६॥

शतावरी विदारीच शालिपर्णी बलामृता ।
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ॥२७॥
काश्मर्य्याश्च फलञ्चैव माषबीजं तथैव च ।
पृथग् दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥२८॥
द्रोणशेष रसे तस्मिन् पचेच्चैवं घृताढकम् ।
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ॥२९॥
पत्रकं नागपुष्पञ्च आत्मगुप्तफलन्तथा ।
नीलोत्पलं सारिवे द्वे जीवनीयगण स्तथा ॥३०॥
पृथक्कर्ष समान्भागांश्छर्करायाः पलद्वयम् ।
रसस्य पौण्ड्रके तुल्य माढ़कैकं समाहरेत् ॥३१॥
रक्तपित्तं क्षतं चीणं कामलां वातशोणितम् ।
हलीमकं पाण्डुरोगं वर्णभेदं स्वरक्षयम् ॥३२॥
मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलञ्च नाशयेत् ।
एतत्सर्पिः प्रयोक्तव्यं वह्नन्तःपुरचारिणाम् ॥३३॥
स्त्रीणाञ्चैवा-प्रजातानां दुर्व्वलानाञ्च देहिनाम् ।
श्रेष्ठं बलकरं वर्ण्यं हृद्यं पुष्टिरसायनम् ॥३४॥
ओजस्तेजस्करं हृद्यमायुष्यं प्राणवर्द्धनम् ।
सम्वर्द्धयति शुक्रञ्च पुरुषं दुर्वलेन्द्रियम् ॥३५॥
सर्व्वरोगविनिर्मुक्तः पयःसिक्तो यथा द्रुमः ।
कामदेव इति ख्यातं सर्पिरुक्तं महागुणम् ॥३६॥ कामदेव घृतं
त्रिफलाद्वे निशे कौन्ती सारिवे द्वे प्रियङ्गुका ।
शालिपर्णी पृष्टिपर्णी देवदार्व्वे-लवालुकम् ॥३७॥
नतं विशाला दन्तीच दाडिमं नागकेशरम् ।
नीलोत्पले-लामञ्जिष्ठाविडङ्गं पद्मकुष्ठकम् ॥३८॥

जातीपुष्पं चन्दनञ्च तालीमं बृहती तथा ।
एतैः कर्षसमैः कल्कैर्जलं दत्त्वा चतुर्गुणम् ॥३९॥
घृतप्रस्थं पचेद्धीमानपस्मारे ज्वरे क्षये ।
उन्मादे वातरक्ते च कासे मन्दानले तथा ॥४०॥
प्रतिश्याये कटीशूले तृतीयक चतुर्थके ।
मूत्रकृच्छ्रे विसर्पे च कण्डूपाण्ड्वामये तथा ॥४१॥
विषद्वये प्रमेहेषु सर्व्वथैव प्रयुज्यते । [कघृतम् ।
वन्ध्यानां पुत्रदं भूतग्रहरक्षोहरं घृतम् ॥४२॥पानीयकल्याण
अमृता क्वाथ कल्काभ्यां सक्षीरं विपचेद्घृतम् ।
वातरक्तं जयत्याशु कुष्ठं जयति दुस्तरं॥४३॥अमृताद्यं घृतम
सप्तच्छदः प्रतिविषा सम्पाकः कटुरोहिणी ।
पाठामुस्तमुशीरञ्च त्रिफला पर्पटस्तथा ॥४४॥
पटोलनिम्बमञ्जिष्ठाः पिप्पली पद्मकं शटी ।
चन्दनं धन्वयासञ्च विशाले द्वे निशे तथा ॥४५॥
गुडूची सारिवे द्वे च मूर्वावासा शतावरी ।
त्रायन्तीन्द्रयवा यष्टी भूनिम्बाश्चाच भागिकाः ॥४६॥
घृतं चतुर्गुणं दत्त्वा घृतादामलकीरसः ।
द्विगुणं सर्पिषश्चात्र जलमष्टगुणं भवेत् ॥४७॥
तत्सिद्धं पाययेत्सर्पिर्वातरक्तेषु सर्वदा ।
कुष्ठानि रक्तपित्तञ्च रक्तार्शांसि च पाण्डुताम् ॥४८॥
हृद्रोगं गुल्मवीसर्पं प्रदरं गण्डमालिकाम् । [घृतं ।
क्षुद्ररोगं ज्वरञ्चैव महातिक्तमिदं जयेत्॥४९॥महातिक्तकं
कासीसं द्वे निशे मुस्तं हरितालं मनःशिलाम् ।
कम्पिल्लकं गन्धकञ्च विडङ्गं गुग्गुलुन्तथा ॥५०॥

सिक्थकं मरिचं शुण्ठीं तुत्थकं गौरसर्षपम् ।
रसाञ्जनञ्च सिन्दूरं श्रीवासं रक्तचन्दनम् ॥५१॥
इरिमेदं निम्बपत्रं करञ्जं सारिवां वचा ।
मञ्जिष्ठा मधुकं मांसी शिरीषं लोध्रपद्मकम् ॥५२॥
हरितकी प्रपुन्नाटं चूर्णयेत्कार्षिकं पृथक् ।
ततस्तच्चूर्णमालोड्य त्रिंशत्पल-मितं घृते ॥५३॥
स्थापयेत्ताम्रपात्रे च घर्म्मे सप्त दिनानि वै ।
अस्याभ्यङ्गेन कुष्ठानि दद्रु पामाविचर्चिका: ॥५४॥
शूकदोषविसर्पाश्च विस्फोटा वातरक्तजा: ।
शिरा स्फोटोपदंशाश्च नाडीदुष्ट व्रणानिच ॥५५॥
शोथोभगन्दरश्चैव लूता: शाम्यन्ति देहिनाम् ।
शोधनं रोपणञ्चैव सुवर्णकरणं घृतम्॥५६॥कासीसाद्य घृतं
जातीनिम्बपटोलञ्च द्वे निशे कटुरोहिणी ।
मञ्जिष्ठामधुकं सिक्थं करञ्जोशीरसारिवा ॥ ५७॥
तुत्थञ्च विपचेत्सम्यक्कल्कैरेभि घृतं बुध: ।
अस्य योगात् विरोहन्ति सूक्ष्मनाडीव्रणा अपि ॥५८॥ [घृतं
मर्माश्रिता: क्लेदिनश्च गम्भीरा: सरुजो व्रणा: ।जात्याद्यं-
चित्रक: शङ्खिनी पथ्या कम्पिल्ल स्त्रिवृतायुगम् ॥५९॥
हयदारुश सम्पाको दन्तीच त्रिपलं तथा ।
कोशातकी देवदाली नीलिनीगिरिकर्णिका ॥६०॥
शातला पिप्पलीमूलं विडङ्गं कटुकी तथा ।
हेमक्षीरी च त्रिपचेत्कल्कैरेभिः विचूर्णितैः ॥६१॥
घृतप्रस्थं स्नुहीक्षीरं षट्पलं तु पलद्वयम् ।
अर्क-क्षीरस्य मतिमान् तल्लिद गुल्मकुष्ठहृत् ॥६२॥

हन्ति शूल मुदावर्त्तं शोथाऽष्मानभगन्दरान् ।
शमयत्युदराण्यष्टौ निपीतं विन्दुसंख्यया ॥६३॥
गोदुग्धेनोष्ट्रदुग्धेन कौलत्थेन शृतेन वा ।
उष्णोदकेन वा पीत्वा विन्दुवेगैर्विरिच्यते ॥६४॥
एतद्विन्दुघृतं नाम नाभिलेपाद्विरिच्यते । विन्दुघृतम् ।
त्रिफलाया रसप्रस्थं प्रस्थं वासा रसोद्भवम् ॥६५॥
भृङ्गराज रसप्रस्थं प्रस्थमाजं पयः स्मृतम् ।
दत्त्वा तत्र घृतप्रस्थं कल्कैः कार्षमितैः पृथक् ॥६६॥
त्रिफला पिप्पली द्राक्षा चन्दनं सैन्धवं बला ।
काकोली क्षीरकाकोली मेदा मरिचनागरम् ॥६७॥
शर्करापुण्डरीकञ्च कमलञ्च पुनर्नवा ।
निशायुग्मञ्च मधुकं सर्व्वैरेभिर्विपाचयेत् ॥६८॥
नक्तान्ध्यं नकुलान्ध्यञ्च कण्डूं पिल्लन्तथैवच ।
नेत्रस्रावञ्च पटलं तिमिरं काचकं जयेत् ॥६९॥
अन्येऽपि प्रशमं यान्ति नेत्ररोगाः सुदारुणाः ।
त्रैफलं घृतमेतद्धि पानेनस्यादिषू दितम् । त्रैफलं घृतम् ।
द्वे हरिद्रे स्थिरामूर्वा सारिवा चन्दनद्वयैः ॥७०॥
मधुपर्ण्यौच मधुक पद्मकेशरपद्मकैः ।
उत्पलोशीर मेदाभिस्त्रिफला पञ्चवल्कलैः ॥७१॥
कल्कैः कर्षमितैरेतैर्घृतप्रस्थं विपाचयेत् ।
विसर्पलूताविस्फोट विषकीट-व्रणापहम् ॥७२॥ [ घृतम्
गौराद्यमिति विख्यातं सर्पिं विषहरं स्मृतम् । गौराद्यं
बलामधुकरास्नाभिर्दशमूलफल त्रिकैः ॥७३॥

पृथग् द्विपलिकैरेभि र्द्रोणनीरेण पाचयेत् ।
मयूरपक्ष पित्तान्त्रयकृत्पादास्य-वर्जितम् ॥७४॥
पादशेषं शृतं नीत्वा चीरं दत्त्वाच तत्समम् ।
घृतप्रस्थं पचेत्सम्यग् जीवनीयैः पिचून्मितैः ॥७५॥
तत्सिद्धं शिरसः पीडामन्याष्टष्ठग्रहन्तथा ।
अर्दितं कर्णनासाक्षि जिह्वागलरुजोजयेत् ॥७६॥
पाने नस्ये तथाभ्यङ्गे कर्णपूरेषु युज्यते ।
हेमन्तकाले शिशिरे वसन्तेषु च सेव्यते ॥७७॥ मयूर घृतम् ।
त्रिफलां मधुकं कुष्ठं द्वे निशे कटुरोहिणी ।
विड़ङ्गं पिप्पलीमुस्तं विशालाकट्फलं वचा ॥७८॥
द्वे मेदे द्वे च काकोल्यौसारिवे द्वे प्रियङ्गुका ।
शतपुष्पाहिङ्गुरास्ना चन्दनं रक्तचन्दनम् ॥७९॥
जातीपुष्पं त्वगाक्षीरी कमलं शर्करा तथा ।
अजमोदाच दन्तीच कल्कैरेतैश्च कार्षिकैः ॥८०॥
जीवद्वत्सैकवर्णानां घृतप्रस्थं गवां पचेत् ।
चतुर्गुणेन पयसा पचेदारण्यगोमयैः ॥८१॥
सुतिथौ पुष्यनक्षत्रे मृद्भाण्डे ताम्रजे तथा ।
ततः पिबेच्छुभदिने नारी वा पुरुषोऽथवा ॥८२॥
एतत् सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते ।
पुत्रानुत्पादयेद्वीरान् बन्ध्याऽपि लभते सुतम् ॥८३॥
अमायुषं वा जनयेद्यावद्भूत्वा पुनः स्थिता ।
पुत्रं प्राप्नोति सा नारी बुद्धिमन्तं शतायुषम् ॥८४॥
एतत् फलघृतं नाम भारद्वाजेन भाषितम् ।
अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्रचिकित्सकाः । इति फलघृतम् ।

वृषनिम्बामृताव्याघ्री पटोलानां शृतेन च ॥८५॥
कल्केन पक्वं सर्पिस्तु निहन्याद्विषमज्वरान् ।
पाण्डुकुष्टं विसर्पञ्च क्रमीनर्शांसि नाशयेत् । पञ्चतिक्तकं घृतम्
सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवां ॥८६॥
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ।
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरे चतुर्गुणे ॥८७॥
तत्सिद्धं पाययेन्नारीं योनिशूलनिपीड़िताम् ।
पीड़िता चलिता याच निःसृता विवृता च या ॥८८॥
पित्रयोनिश्च विभ्रान्ता षण्डयोनि श्च या स्मृताः ।
प्रपद्यन्ते हि ताः स्थानं गर्भं गृह्णन्ति चासकृत् ॥८९॥
एतत् फलघृतं नाम योनिदोषहरं परम् ॥ लघूफलघृतम्।

अथ दशमोऽध्यायः ।

लाक्षाढकं क्वाथयित्वा जलस्य चतुराढकैः ।
चतुर्थांशं शृतं नीत्वा तैलप्रस्थे विनिःक्षिपेत् ॥१॥
कल्का चतुर्गुणं स्नेहं स्नेहात् क्वाथं चतुर्गुणम् ।
क्वाथा चतुर्गुणं वारि साध्यं साध्यस्य मे मतिः ॥२॥
प्रथमे दापयेत् दुग्धं द्वितीये सर्पिषं तथा ।
तृतीये दापयेत् कल्कं चतुर्थे क्वाथ मावपेत् ॥३॥
मस्त्वाढक श्च गोदध्नः स्तत्रैवं विनियोजयेत् ।
शतपुष्पामश्वगन्धां हरिद्रां देवदारु च ॥४॥
कटुकां रेणुकां मूर्वां कुष्ठञ्च मधुयष्टिकाम् ।
उशीरं पद्मकं मांसीं दार्व्वीं मञ्जिष्टकां बलाम् ।
चन्दनं मुस्तकं रास्नां पृथक्कर्षप्रमाणतः ॥५॥
चूर्णये तत्र निक्षिप्य साधयेन्मृदुवह्निना ।

यस्याभ्यङ्गाय्यग्यन्ति सर्वेऽपि विषमज्वराः ॥६॥
कासश्वास प्रतिश्यायाःत्रिकपृष्ठ ग्रहास्तथा ।
वातपित्तप्रसारश्च्चोन्मादं यथराघसान् ॥७॥
कण्डू शूलञ्च दौर्गन्ध्यं गात्राणां स्फुटनं जयेत् ।
पुष्टगर्भा भवेद्दस्य गर्भिण्यभ्यङ्गतो भ्रमम् ॥८॥लाक्षाद्यं तैलम्
अश्वगन्धां वलां विल्वं पाटलां वृहतीद्वयम् ॥
श्वदंष्ट्रातिवला निम्बाश्योनाकञ्च पुनर्नवाम् ॥९॥
प्रसारिणीमग्निमन्थं कुर्य्याद्दशपलं पृथक् ।
चतुर्द्रोणेऽम्भसि पक्का पादशेषं शृतं नयेत् ॥१०॥
तैलाढकेन संयोज्य शतावर्या रसाढकम् ।
चिपेत्तत्र च गोक्षीरं तैलात्तस्माच्चतुर्गुणम् ॥११॥
शनैर्विपाचयेदेभिः कल्कैः द्विपलिकैः पृथक् ।
कुष्ठैला चन्दनं वालां मांसी शैलेयसैन्धवैः ॥१२॥
अश्वगन्धा बलारास्ना शतपुष्पेन्द्रदारुभिः ।
पर्णीचतुष्टयेनैव तगरेण च साधयेत् ॥१३॥
तत्तैलं लावनाभ्यङ्गपाने वस्तौ च योजयेत् ।
पक्षाघातं हनुस्तम्भं मन्यास्तम्भं गलग्रहम् ॥१४॥
कुब्जत्वं वधिरत्वं च गतिभङ्गं कटिग्रहम् ।
गात्रशोषेन्द्रियध्वंसौ नष्टशुक्रं ज्वरक्षयान् ॥१५॥
अण्डवृद्धिं कुरण्ड च दन्तरोगं शिरोग्रहम् ।
पार्श्वशूलञ्च पाङ्गुल्यं बुद्धिहान्यञ्च गृध्रसीम् ॥१६॥
अन्यांश्च विषमान् वातान् जयेत्सर्वाङ्ग संश्रयान् ।
यस्य प्रभावा वन्ध्यापि नारी पुत्रम्प्रसूयते ॥१७॥
मर्त्यो गजो वा तुरग स्तैलादस्मात् सुखी भवेत् ।

यथा नारायणो देवो दुष्टदैत्य विनाशनः ॥१८॥
तथैव वातरोगाणां नाशनं तैलमुत्तमम् । नारायणं तैलम् ।
बलामूलकषायेण दशमूलशृतेन च ॥१९॥
कुलत्थयवकोलानां क्वाथेन पयसा तथा ।
अष्टाष्टभागयुक्तेन भागमेकञ्च तैलतः ॥२०॥
पचेन जीवनीयेन शतावर्य्येन्द्रदारुणी ।
मञ्जिष्ठाकुष्ठ शैलेयतगरागुरुसैन्धवैः ॥२१॥
वचापुनर्नवा मांसी सारिवा हयपत्रकैः ।
शतपुष्पाश्वगन्धाभ्यां मेलयित्वा विपाचयेत् ॥२२॥
गर्भार्थिनीनां नारीणां नराणां क्षीणरेतसाम् ।
व्यायामक्षीणगात्राणां सूतिकानाञ्च युज्यते ॥२३॥
राज्ञां योग्यमिदं तैलं सुखिनाञ्च विशेषतः ।
बलातैलमितिख्यातं सर्ववातामयापहम् । बलातैलम्
प्रसारिणी पलशतं जलद्रोणे विपाचयेत् ॥२४॥
पादशिष्टः शृतो ग्राह्यस्तैलं दधि च तत्समम् ।
काञ्जिकञ्च समं तेन क्षीरं तैलाच्चतुर्गुणम् ॥२५॥
तैलात्तथाष्टमांशेन सर्वकल्कानि योजयेत् ।
मधुकं पिप्पलीमूलं चित्रकं सैन्धवं वचाम् ॥२६॥
प्रसारिणीदेवदारुरास्नाच गजपिप्पली ।
भल्लातः शतपुष्पाच मांसी वापि विपाचयेत् ॥२७॥
एवं तैलवरं पक्वं वातश्लेष्मामयाम् जयेत् ।
कौब्जपङ्गुत्वखञ्जत्वं गृध्रसी मर्दितं तथा ॥२८॥
हनुपृष्ठशिरोग्रीवाकटिस्तम्भञ्च नाशयेत् । [तैलम्
अन्यांश्चविषमान्वातान् सर्व्वान्नाशुव्यपोहति॥२९॥प्रसारिणी

माषा यवातसीचुद्रामर्कटी च कुरण्टकः ।
गोकण्टः टुण्टुकश्चैषां कुर्यात्सप्तपलं पृथक् ॥२०॥
चतुर्गुणाम्बुना पक्त्वा पादशेषं शृतं नयेत् ।
कार्पासकास्थिवदरं शणवीजं कुलत्थकम् ॥२१॥
पृथक् चतुर्दशपलं चतुर्गुणजले पचेत् ।
चतुर्थांशावशिष्टं च गृह्णीयात्क्वाथमुत्तमम् ॥२२॥
प्रस्थैकं छागमांसस्य चतुःषष्टिपले जले ।
निक्षिप्य पाचयेद्धीमान् पादशेषं शृतंनयेत् ॥२३॥
तैलप्रस्थे ततः सर्वान्क्वाथानेतान् विनिक्षिपेत् ।
कल्कैरेभिश्च विपचेदमृता कुष्ठनागरैः ॥२४॥
रास्नापुनर्नवैरण्डैः पिप्पल्या शतपुष्पया ।
बलाप्रसारिणीभ्याञ्च मांस्याकटुकया तथा ॥२५॥
पृथगर्द्ध पलैरेतैः साधयेन्मृदुनाग्निना ।
हन्यात्तैल मिदं शीघ्रं ग्रीवास्तम्भाचवाहुकौ ॥२६॥
सर्वाङ्गशोषमाक्षेप मूरुस्तम्भापतानकौ ।
शाखाकम्पं शिरः कम्पं विश्वाचीमर्द्दितं तथा ॥२७॥
माषादिक मिदंतैलं सर्व्ववातविकारनुत् । माषाद्यं तैलम् ।
शतावरीबलायुग्मं पर्णीशगन्धं वहस्तकः ॥२८॥
अश्वगन्धाश्वदंष्ट्राच विल्वःकाशः कुरण्टकः ।
एषां सार्द्ध पलान् भागान् कल्पयेच्च विपाचयेत् ॥२९॥
चतुर्गुणेन नीरेण पादशेषं शृतं नयेत् ।
नियोज्य तैलप्रस्थेन चीरप्रस्थं विनिक्षिपेत् ॥४०॥
शतावरी रसप्रस्थं जलप्रस्थञ्च योजयेत् ।
शतावरी-देवदारुमांसीतगरचन्दनम् ॥४१॥

शतपुष्पावला कुष्ठमेला शैलेयमुत्पलम् ।
ऋद्धिर्मेधा च मधुकं काकोली जीवकस्तथा ॥४२॥
एषां कर्षसमैः कल्कैस्तैलं गोमयवह्निना ।
पचेदनेन तैलेन नरः स्त्रीषु वृषायते ॥४३॥
नारी च लभते पुत्रं योनिशूलञ्च नश्यति ।
कुक्षिशूलं शिरःशूलं कामलां पाण्डुताज्वरम् ॥४४॥
गृध्रसी श्लीपदोषांश्च मेहान्दृढा पतानकम् ।
सदाहं वातरक्तञ्च वातपित्त-गदार्दितम् ॥४५॥
असृग्दरन्तथाध्मानं रक्तपित्तं नियच्छति । [यीयेस्वाहा ।
शतावरीतैलमिदं कृष्णात्रेयेण भाषितम् ॥ ४६॥ओंनमो नाराय-
उत्तराभिमुखो भूत्वा खनेत् खदिरशङ्कुना ।
ओं सर्वव्याधि साधनीयेस्वाहा इत्युत्पाटनमन्त्रः४७[स्नौषधतैलं
ओं कुमारीजीवनीये स्वाहा। इति पाचनमन्त्रः। शतावरीदि-
कासीसं लाङ्गली कुष्ठं शुण्ठी कृष्णा च सैन्धवम् ॥४८॥
मनः शिलाश्वमारञ्च विडङ्गं चित्रको वृषः ।
दन्ती कोशातकी बीजं हेमाह्वा हरितालकम् ॥४९॥
कल्कैः कर्षमितैस्तैलन्ततः प्रस्थं विपाचयेत् ।
स्नुह्यर्कपयसोर्दद्यात् पृथग्द्विपल संमिते ॥५०॥
चतुर्गुणं गवां मूत्रं दत्त्वा सम्यक् प्रसाधयेत् ।
कथितं चारणाद्येन तैलमर्शोविनाशनम् ॥५१॥
क्षार वत्पातयत्येत दर्शांस्यभ्यङ्गतो ध्रुवम् ।
वलिं न दूषयत्येतत्क्षार कर्मकरं स्मृतम् ॥५२कासीसाद्यं तैलम्
मञ्जिष्ठासारिवा सर्जयष्टी सिक्थैःपयोन्वितैः ।
पिण्डाख्यं साधयेत्तैलमभ्यङ्गाद्वातरक्तनुत् ॥५३॥पिण्डतैलम् ।

अर्कपत्ररसे पक्वा हरिद्राकल्कसंयुतम्।
नाशयेत्सार्षपं तैलं पामां कच्छूं विचर्चिकाम् ॥५४॥ अर्कतैलम्

मरिचं हरितालञ्च त्रिवृत रक्तचन्दनम्।
मुस्तं मनः शिलामांसी हेनिशे देवदारु च ॥५५॥
विशाला करवीरञ्च कुष्ठमर्कपयस्तथा।
तथैव गोमयरसं कुर्यात् कर्षमितान् पृथक् ॥५६॥
विषञ्चार्द्धपलं देयं प्रस्थञ्च कटतैलकम्।
गोमूत्रं द्विगुणन्दद्यात् जलञ्च द्विगुणं भवेत् ॥५७॥
मरिचाद्यमिदं तैलं सिद्धं कुष्ठप्रणाशनम्।
जयेत्श्वित्राणि सर्वाणि पुण्डरीकं विचर्चिकाम् ५८ [तैलम्

पामांश्चित्राणि रक्तसान्द्रं कच्छूं प्रणाशयेत्। मरिचाद्य-
त्रिफलारिष्ट भूनिम्बं हे निशे रक्तचन्दनम् ॥५९॥ तैलम्
एतैः सिद्ध मरूषाणां तैलमभ्यञ्जने हितम्। त्रैफलं-
भावयेन्निम्ब वीजानि भृङ्गराजरसेन हि ॥६०॥
तथाऽसनस्य तोयेन तत्तैलं हन्ति नस्यतः। तैलम्।
अकालपलितं सद्यः पुंसान्दुग्धान्न भोजिनाम्। निम्ववीज-
यष्टीमधुकचाराभ्यां नवधात्रीफलैः सृतम् ॥६१॥
तैलं नस्ये कृतंकुर्यात् केशान्श्मश्रूणि सद्दृशः। यष्टीमधुकतैलम्
करञ्जचित्रको जातो करवीरैश्च पाचितम् ॥६२॥
तैलमेभिर्द्रुतं हन्यादभ्यङ्गादिन्द्रलुप्तकम्। करञ्जाद्यं तैलम
नीलिका केतकी कन्दं भृङ्गराजः कुरण्टकः ॥६३॥
तथार्जुनस्य पुष्पाणि वीजकाः सुमनोऽपि।
कृष्णातिलाश्च तगरं समूलं कमलं तथा ॥६४॥
अशोरजः प्रियङ्गुश्च दाडिम त्वग्गुडूचिका।

त्रिफलापद्म पञ्चक्र कल्कैरेभिः पृथक्पृथक् ॥६५॥
कर्षमानैःपचेत्तैलं त्रिफलाक्काथसंयुतम्।
भृङ्गराजरसेनैव सिद्धं केशस्थिरीकृतम् ॥६६॥ [ तैलम्
अकालपलितं हन्ति दारुणं शोषजिह्विकाम्। निलीकाद्यं
भृङ्गराजरसेनैव लौह किट्टं फलत्रिकम् ॥६७॥
सारिवाच पचेत्कल्कैस्तैलं दारुणनाशनम्।
अकालपलितं कण्डूमिन्द्रलुप्तञ्च नाशयेत्। भृङ्गराजतैलम्।
इरिमेदत्वचं क्षुणां पचेच्छतपलोन्मितम् ॥६८॥
जलद्रोणेन तत्क्काथं गृह्णीयात्पादशेषितम्।
तैलस्यार्द्धाढकं दत्वा कल्कैः कर्षमितैः पचेत् ॥६९॥
इरिमेदलवङ्गाभ्यां गैरिकागुरु पद्मकैः।
मञ्जिष्ठालोध्रमधुकै लाक्षान्यग्रोधमुस्तकैः।
त्वग्जातीफलकर्पूर कङ्कोल खदिरैस्तथा ॥७०॥
पतङ्गधातकीपुष्पा सूक्ष्मैला नागकेशरैः।
कटफलेनच संसिद्धं तैलं मुखरुजञ्जयेत्।
प्रदुष्टमांसं चलितं शीर्णदन्तञ्च सौषिरम् ॥७१॥
शीतादं दन्तहर्षञ्च विद्रधिक्रमिदन्तकम्। [ तैलम्।
दन्तस्फुटनदौर्गन्ध्य जिह्वाताल्वोष्ठजं रुजम् ॥७२॥ इरिमेदाद्य
हिङ्गुतुम्बर शुण्ठीभिः कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णशूलं प्रणश्यति। हिङ्ग्वाद्यं तैलम्।
बालविल्वानि गोमूत्रे पिष्ट्वा तैले विपाचयेत् ॥७३॥
साजक्षीरं च नीरञ्च वाधिर्य्ये कर्णपूरणम्। इति विल्वतैलम्
बालमूलकशुण्ठीनां क्षारः क्षारयुगन्तथा ॥७४॥
लवणानिच पञ्चैव हिङ्गुशिग्रुमहौषधम।

अर्कपत्ररसे पक्वा हरिद्राकल्कसंयुतम् ।
नाशयेत्सार्षपं तैलं पामां कच्छू विचर्चिकाम् ॥५४॥अर्कतैलम्
मरिचं हरितालञ्च त्रिवृत रक्तचन्दनम् ।
मुस्तं मनः शिलामांसी हेनिशे देवदारु च ॥५५॥
विशाला करवीरञ्च कुष्ठमर्कपयस्तथा ।
तथैव गोमयरसं कुर्यात् कर्षमितान् पृथक् ॥५६॥
विषस्यार्द्धपलं देयं प्रस्थञ्च कटतैलकम् ।
गोमूत्रं द्विगुणन्दद्यात् जलञ्च द्विगुणं भवेत् ॥५७॥
मरिचाद्यमिदं तैलं सिद्धं कुष्ठप्रणाशनम् ।
जयेत्श्वित्राणि सर्वाणि पुण्डरीकं विचर्चिकाम्५८[तैलम
पामांश्चिश्चानि रक्तसान्द्रं कण्डूं प्रणाशयेत् । मरिच्याद्य-
त्रिफलारिष्ट भूनिम्बं हेनिशे रक्तचन्दनम् ॥५९॥तैलम्
एतैः सिद्ध मरूचाणां तैलमभ्यञ्जने हितम् । त्रैफलं-
भावयेन्निम्ब वीजानि भृङ्गराजरसेन हि ॥६०॥
तथाऽसनस्य तोयेन तत्तैलं हन्ति नस्यतः । तैलम् ।
अकालपलितं सद्यः पुंसान्दुग्धान्न भोजिनाम् । निम्बवीज-
यष्टीमधुकधाराभ्यां नवधात्रीफलैः स्रुतम् ॥६१॥
तैलं नस्ये कृतंकुर्यात् केशान्श्मश्रूणि सत्वरः ।यष्टीमधुकतैलम
करञ्जचित्रको जाती करवीरैश्च पाचितम् ॥६२॥
तैलमेभिर्द्रुतं हन्यादध्यङ्गादिन्द्रलुप्तकम् । करञ्जाद्यं तैलम
नीलिका केतकी कन्दंभृङ्गराजः कुरण्टकः ॥६३॥
तथार्जुनस्य पुष्पाणि वीजकाः सुमनोऽपि ।
कृष्णातिलाश्च तगरं समूलं कमलं तथा ॥६४॥
अवोरजः प्रियङ्गुश्च दाड़िम त्वग् कूपिका ।

त्रिफलापद्म पङ्कश्च कल्कैरेभिः पृथक्पृथक् ॥६५॥
कर्षमानैःपचेत्तैलं त्रिफलाक्वाथसंयुतम् ।
भृङ्गराजरसेनैव सिद्धं केशस्थिरोकृतम् ॥६६॥ [ तैलम्
अकालपलितं हन्ति दारुणं श्लीपजिह्विकाम् । निलीकाद्यं
भृङ्गराजरसेनैव लौह किट्टं फलत्रिकम् ॥६७॥
सारिवाच पचेत्कल्कैस्तैलं दारुणनाशनम् ।
अकालपलितं कण्डूमिन्द्रलुप्तञ्च नाशयेत् । भृङ्गराजतैलम् ।
इरिमेदत्वचं क्षुणां पचेच्छतपलोन्मितम् ॥६८॥
जलद्रोणेन तत्क्वाथं गृह्णीयात्पादशेषितम् ।
तैलस्यार्द्धाढकं दत्त्वा कल्कैः कर्षमितैः पचेत् ॥६९॥
इरिमेदलवङ्गाभ्यां गैरिकागुरु पद्मकैः ।
मञ्जिष्ठालोध्रमधुकैर्लाक्षान्यग्रोधमुस्तकैः ।
त्वग्जातीफलकर्पूर कङ्कोल खदिरैस्तथा ॥७०॥
पतङ्गधातकीपुष्पा सूक्ष्मैला नागकेशरैः ।
कटफलेनच संसिद्धं तैलं मुखरुजञ्जयेत् ।
प्रदुष्टमांसं चलितं शीर्णं दन्तञ्च सौषिरम् ॥७१॥
शीतादं दन्तहर्षञ्च विद्रधिकृमिदन्तकम् । [ तैलम् ।
दन्तस्फुटनदौर्गन्ध्य जिह्वाताल्वोष्ठजं रुजम् ॥७२॥ इरिमेदाद्य
हिङ्गुतुम्बर शुण्ठीभिः कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णशूलं प्रणश्यति । हिङ्ग्वाद्यं तैलम् ।
बालबिल्वानि गोमूत्रे पिष्ट्वा तैले विपाचयेत् ॥७३॥
साजक्षीरं च नीरञ्च वाधिर्ये कर्णपूरणम् । इति बिल्वतैलम्
बालमूलकशुण्ठीनां क्षारः क्षारयुगन्तथा ॥७४॥
लवणानिच पञ्चैव हिङ्गु शिग्रुमहौषधम ।

देवदारु वचाकुष्ठं शतपुष्पारसाञ्जनम् ॥७५॥
ग्रन्थिकं भद्रमुस्तञ्च कल्कैः कर्षमितैः पृथक् ।
तैलप्रस्थञ्च विपचेत्कदलीवीजपूरयोः ॥७६॥
रसाभ्यां मधुयुक्तेन चतुर्गुणमितेनच ।
पूयस्रावञ्चर्णनादं शूलं वधिरतां कृमीन् ॥७७॥ [ तैलम्
अन्यांश्च कर्णजान् रोगान् मुख-रोगां-श्चनाशयेत् । इति क्षार
जम्बीराणां फलरसः प्रस्थैकः कुडवोन्मितम् ॥७८॥
माक्षिकं तत्र दातव्यं पलैका पिप्पली स्मृता ।
एतदेकीकृतं सर्वं मधुभाण्डे निधापयेत् ॥७९॥[ क्षार तैल
धान्यराशौ स्थितं मासं मधुयुक्तमुदाहृतम् । मधुयुक्त विधानं
पाठा द्वे च निशे मूर्वा पिप्पलीजातिपल्लवैः ॥८०॥
दन्त्याच तैलंसंसिद्धं नस्यं स्याद्दुष्टपीनसे ।पाठाद्यं तैलम्
कुष्ठविल्वकणाशुण्ठी द्राक्षाकल्क कषायवत् ॥८१॥
साधितन्तैलमाज्यं वा न स्यात्क्षवथुनाशनम् ।कुष्टतैलम्
व्याघ्री दन्तीवचाशिग्रु तुलसीव्योषसैन्धवैः ॥८२॥
कफस्य पाचनं तैलं पूतिनासगदापहम् । व्याघ्री तैलम्
गृहधूमकणादारु चारनक्ताह्वसैन्धवैः ॥८३॥
सिद्धं शिखरिवीजैश्च तैलं नासार्शसां हितम् । गृहधूमतैल
वज्रीक्षीरं रविक्षीरं द्रवं धत्तूरजम् ॥८४॥
महिषी विड्भवं द्रावं सर्व्वांशं तिलतैलकम् ।
पचेत्तैलावशेषं च गोमूत्रेऽथ चतुर्गुणे ॥८५॥
तैलावशेषं पक्वा च तत्तैलं प्रस्थमात्रकम् ।
गन्धकाग्निशिलातालं विडङ्गातिविषाविषम् ॥८६॥
तिक्तकोशातकी कुष्ठं वचामांसीकटुत्रयम् ।

पीतदारुच यष्ट्याह्वं स्वर्जिकाक्षारजीरकम् ॥८७॥
देवदारुच कार्षांशश्चूर्णं तैले विमिश्रयेत् ।
वज्रतैलमिदं ख्यातमभ्यङ्गात्सर्व-कुष्ठनुत्॥८८वज्राद्यं तैलम्
करवीरशिफादन्तीं द्वृत्कोषातकी फलम् । [तैलम्
रम्भाक्षारोदकं तैलं प्रशस्तं लोमशातनम्॥८९॥ करवीराद्यं

अथ एकादशोऽध्यायः ।

द्रवेषु चिरकालस्थं द्रव्य यत्संन्धितं भवेत्।
आसवारिष्टभेदैस्तु प्रोच्यते भेषजोचितम् ॥१॥
यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः ।
अरिष्टःक्वाथसाध्यः स्यात्तयोर्मानं पलोन्मितम् ॥२॥
अनुक्तमानारिष्टेषु द्रवे द्रोणे गुडातुलाम् ।
क्षौद्रं क्षिपेद्गुडादर्द्धं प्रक्षेपं दशमांशिकम् ॥३॥
ज्ञेयः शीतरसः सीधुरपक्वमधुरद्रवैः ।
सिद्धः पक्वरसः सीधुः सम्पक्वमधुरद्रवैः ॥४॥
परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः ।
सुरामण्डः प्रसन्ना स्यात्ततः कादम्बरी घना ॥५॥
तदधो जगलो ज्ञेयो मेदको जगलाद्घनः ।
वक्कसो हृतसारः स्यात्सुराबीजन्तु किण्वकम् ॥६॥
यत्तालखर्ज्जूररसैः सन्धिता सा हि वारुणी ।
कन्दमूलफलादीनि सस्नेहलवणानि च ॥७॥
यत्र द्रवेभिसूयन्ते तत्सूक्तमभिधीयते ।
विनष्टमम्लतां यातं मद्यं वा मधुरद्रवः ॥८॥
विनष्टःसन्धितोयस्तु तच्चुक्रमभिधीयते ।
गुडाम्बुना सतैलेन कन्दशाकफलैस्तथा ॥९॥

सन्धितस्माल्लतां जातं गुडसूक्तं प्रचक्षते ।
एवमेवेक्षुसुक्तं स्यान्मृद्वीकासम्भवस्तथा ॥१०॥
तुषाम्बु सन्धितं ज्ञेयमामैर्विदलितैर्यवैः ।
यवैस्तुनिस्तुषैः पक्वैः सौवीरं सन्धितम्भवेत् ॥११॥
कुल्माषधान्यमण्डादि सन्धितं काञ्जिकं विदुः ।
शाण्डाकी सन्धिता ज्ञेया मूलकैः सर्षपादिभिः॥१२॥
अथ आसवाः उशीरं बालकं पद्मं काश्मरीनीलमुत्पलम् ।
प्रियङ्गुः पद्मकं लोध्रं मञ्जिष्ठाधन्वयासकम् ॥१३॥
पाठाकिराततिक्तञ्च न्यग्रोधोडुम्बरं शठीम् ।
पर्पटं पुण्डरीकञ्च पटोलं काञ्चनारकम् ॥१४॥
जम्बूशाल्मलि-निर्यासं प्रत्येकं पलसम्मितान् ।
भागान् सुचूर्णितान् कृत्वा द्राक्षायाः पलविंशतिः ॥१५॥
धातकीं षोडशपलां जलद्रोणद्वये क्षिपेत् ।
शर्करायास्तुलान्दत्त्वा क्षौद्रस्यार्द्धतुलान्तथा ॥१६॥
मासं संस्थापयेद्भाण्डे मांसीमरिच धूपिते ।
उशीरासव इत्येष रक्तपित्तविनाशनः ॥ १७ ॥
पाण्डु कुष्ठ प्रमेहार्शः क्रमिशोथहरस्तथा । उशीरासवः ।
पिप्पली मरिचं चव्यं हरिद्राचित्रको घनः ॥१८ ॥
विडङ्गं क्रमुको लोध्रः पाठा धात्र्येल वालुकम् ।
उशीरं चन्दनं कुष्ठं लवङ्गन्तगरन्तथा ॥१९॥
मांसीत्वगेलपत्रं प्रियङ्गुर्नागकेशरम् ।
एषामर्द्धपलान् भागान् सूक्ष्मचूर्णीकृतान् शुभान् ॥२०॥
जलद्रोणद्वये क्षिप्त्वा दद्याद्गुडतुलात्रयम् ।
पलानि दश धातक्या द्राक्षा षष्टिपला भवेत्॥२१॥

घृतान्येकत्र संयोज्य मृद्‌भाण्डे विनिक्षिपेत्।
ज्ञात्वा रसगतं सर्व्वं पाययेदग्न्यपेक्षया ॥२२॥
श्वयथुं जठरं कार्श्यं ग्रहणीं पाण्डुतान्तथा। [पिप्पल्याद्यासवः
अर्शांसि नाशयेच्छीघ्रं पिप्पल्याद्यासवस्त्वयम् ॥२३ ॥पिप्प-
लोहचूर्णं त्रिकटुकं त्रिफलञ्च यवानिका।
विडङ्गं मुस्तकं चित्रं चतुःसंख्योपलं क्षिपेत् ॥२४॥
चूर्णीकृत्य ततः क्षौद्रं चतुः षष्टिपलं पृथक्।
दद्याद्गुड़तुलां तत्र जलद्रोणद्वयन्तथा ॥२५ ॥
घृतभाण्डे विनिक्षिप्य निदध्यान्मासमात्रकम्।
लोहासवममुं मर्त्यः पिवेदग्निकरम्परम् ॥ २६ ॥
पाण्डुश्वयथुगुल्मानि जठराण्यर्शसां रुजम्।
कुष्ठं प्लीहामयं कण्डूं कासं श्वासं भगन्दरम् ॥२७॥
अरोचकञ्च ग्रहणीं हृद्रोगञ्च विनाशयेत्। लोहासवः।
[अथारिष्टः] तुलाकुटजमूलस्य मृद्वीकार्द्धतुलान्तथा ॥२८॥
मधूकपुष्पकाश्मर्य्य भागान् दशपलोन्मितान्।
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणञ्चैवावशेषितम् ॥२९ ॥
धातक्या विंशतिपलं गुडस्य च तुलां क्षिपेत्।
मासमात्रं स्थितो भाण्डे कुटजारिष्टसंज्ञितम् ॥३०॥
ज्वरान् प्रशमयेत्सर्वान् कुर्यात्तीक्ष्णं धनञ्जयम्।कुटजारिष्टः
विडङ्गं ग्रन्थिकं रास्ना कुटजत्वक् फलानि च॥३१॥
पाठैलवालुकं धात्री भागान् पञ्चपलान् पृथक्।
अष्टद्रोणेऽम्भसः पक्त्वा कुर्यात् द्रोणावशेषितम्॥३२॥
पूते शीते क्षिपेत्तत्र क्षौद्रस्य शतत्रयम्।
धातकी विंशतिपलं त्रिजातं द्विपलं तथा ॥३३॥

प्रियङ्गु काश्मरीणां सलोध्राणां पलं पलम् ।
व्योषस्य च पलान्यष्टौ चूर्णीकृत्य प्रदापयेत् ॥३४॥
घृतभाण्डे विनिक्षिप्य मासमेकं विधारयेत् ।
ततः पिवेद्यथार्हं तु जये द्विद्रधिमुत्थितम् ॥३५॥
ऊरुस्तम्भाश्मरीमेहान् प्रत्यष्ठीला भगन्दरान् ।
गण्डमालां हनुस्तम्भं विडङ्गारिष्टसंभवः ॥३६॥ विडङ्गारिष्टः
तुलार्द्धं देवदारु स्याद्वासायाः पलविंशतिः ।
मञ्जिष्ठेन्द्रयवा दन्ती तगरं रजनीद्वयम् ॥३७॥
रास्नाकृमिघ्नं मुस्तञ्च शिरीषं खदिरार्जुनौ ।
भागान् दशपलान् दद्याद्यवान्या वत्सकस्य च ॥३८॥
चन्दनस्य गुडूच्याश्च रोहिण्या श्चित्रकस्य च ।
भागानष्टपलानेतानष्ट द्रोणेऽम्भसः पचेत् ॥३९॥
द्रोणशेषे कषाये च पूते शीते प्रदापयेत् ।
धातक्याः षोडशपलं माक्षिकस्य तुलात्रयम् ॥४०॥
व्योषस्य द्विपलं दद्यात् त्रिजातकचतुःपलम् ।
चतुःपलं प्रियङ्गोश्च द्विपलं नागकेशरम् ॥४१॥
सर्वाण्येतानि संचूर्ण्य घृतभाण्डे विधारयेत् ।
मासादूर्ध्वं पिवेदेनं प्रमेहं हन्ति दुस्तरम् ॥४२॥
वातरोगग्रहण्यर्शोमूत्रकृच्छ्राणि नाशयेत् ।
देवदार्व्यादिकोरिष्टो दद्रुकुष्टविनाशनः॥४३॥देवदार्वारिष्टः
खदिरस्य तुलार्द्धन्तु देवदारु च तत्समम् ।
वाकुची द्वादशपला दार्वी स्यात्पलविंशतिः ॥४४॥
त्रिफला विंशतिपलान्यष्टद्रोणेऽम्भसः पचेत् ।
कषाये द्रोणशेषे च पूते शीते विनिक्षिपेत् ॥४५॥

तुलाद्वयं माचिकस्य तुलैका शर्करा मता ।
धातक्या विंशतिपलं कंकोलं नागकेशरम् ॥४६॥
जातीफलं लवङ्गैला त्वक्पत्राणि पृथक् पृथक् ।
पलोन्मितानि कृष्णाया दद्यात्पलचतुष्टयम् ॥४७
घृतभाण्डे विनिक्षिप्य मासादूर्ध्वं पिबेत्ततः ।
महाकुष्ठानि हृद्रोगं पाण्डुरोगार्बुदं तथा ॥४८॥
गुल्मं ग्रन्थिकृमीन् कासं तथा प्लीहोदरं जयेत् ।
एष वै खदिरारिष्टः सर्वकुष्ठ निवारणः ॥४९॥खदिरारिष्टः
तुलाद्वयं तु वब्बूल्या चतुर्द्रोणे जले पचेत् ।
द्रोणशेषे रसे शीते गुडस्य त्रितुलां क्षिपेत् ॥५०॥
धातकी-षोडशपलां कृष्णाञ्च द्विपलांशिकाम् ।
जातीफलानि कंकोलं त्वगेलापत्रकेशरम् ॥५१॥
लवङ्गं मरिचञ्चैव पलिकान्युपकल्पयेत् ।
मासंभाण्डे स्थितं त्वेष वब्बूल्यारिष्टको जयेत् ॥५२॥
क्षयं कुष्ठ मती-सारं प्रमेहश्वासकासकान् । वब्बूल्याद्यरिष्टः
द्राक्षातुलार्द्धं द्वि-द्रोणे जलस्य विपचेत्सुधीः ॥५३॥
पादशेषे कषाये च पूते शीते विनिःक्षिपेत् ।
गुडस्य द्वितुलां तत्र त्वगेलापत्रकेशरम् ॥५४॥
प्रियङ्गुमरिचं कृष्णा विडङ्गञ्चेति चूर्णयेत् ।
पृथक् पलोन्मितैर्भागै घृतभाण्डे निधापयेत् ॥५५॥
समन्ततो घर्षयित्वा पिबेज्जातरसन्ततः ।
उरः क्षतं क्षयं हन्ति कासं श्वास-गलामयान् ॥५६॥
द्राक्षारिष्टाह्वयः प्रोक्तो वलकृन्मलशोधनः । द्राक्षारिष्टः ।
रोहीतकतुलामेका-श्चतुर्द्रोणे जले पचेत् ॥५७॥

पाद्‌शेषे रसे पूते शीते पलशतद्वयम् ।
दद्याद्गुडस्य धातक्याः पल-षोडशिका मता ॥५८॥
पञ्चकोलं त्रिजातञ्च त्रिफला ञ्च विनिक्षिपेत् ।
चूर्णयित्वा पलांशेन ततो भाण्डे निधापयेत् ॥५९॥
मासादूर्द्धञ्च पिवतां गुदजा यान्ति संक्षयम् ।
ग्रहणीपाण्डुहृद्रोग प्लीहगुल्मोदराणिच ॥६०॥
कुष्ठशोफारुचिहरो रोहीतारिष्टसंज्ञितः ।रोहीतकारिष्टः
पर्णौब्रहत्यौ गोकण्टविल्वोग्निमथेनोरलुः ।
पाटला काश्मरी चेति दशमूल मिहोच्यते ।
दशमूलानि कुर्वीत भागैः पञ्चपलैः पृथक् ॥६१॥
पञ्चविंशत्पलं कुर्याच्चित्रकं पौष्करन्तथा ।
कुर्याद्विंशत्पलं लोध्रं गुडूची तत्समा भवेत् ।
पलैः षोडशभि र्धात्री र्रविसंख्यैर्दुरालभा ॥६२॥
खदिरो वीजसारश्च पथ्या चेति पृथक्पलैः ।
अष्टाभिर्गुणितैः कुष्ठं मञ्जिष्ठा देवदारु च ।
विडङ्गं मधुकं भार्गी कपित्थोक्षः पुनर्नवा ॥६३॥
चव्यं मांसी प्रियङ्गुश्च सारिवा कृष्णजीरकम् ।
त्रिवृता रेणुकं रास्ना पिप्पली क्रमुकः सटी ॥६४॥
हरिद्रा शतपुष्पाच पद्मकं नागकेशरम् ।
मुस्त मिन्द्रयवाः शृङ्गी जीवकर्षभकौ तथा ॥६५॥
मेदा चान्या महामेदा काकोल्यौ ऋद्धिवृद्धिके ।
कुर्यात् पृथक्द्विपलिका पचेदष्टगुणे जले ॥६६॥
चतुर्थांशसृतं नीत्वा मृद्‌भाण्डे सन्निधापयेत् ।
ततः षष्टिपलां द्राक्षां पचेन्नीरे चतुर्गुणे ॥६७॥

त्रिपादशेषं शीतञ्च पूर्व्वक्वाथे शृतं क्षिपेत् ।
द्वात्रिंशत्पलिकं चौद्रन्दद्याद्गुड़ चतुःशतम् ॥६८॥
त्रिंशत्पलानि धातक्याः कङ्कोलं जलचन्दनम् ।
जातीफलं लवङ्गञ्च त्वगेलापत्र केशरम् ॥६९॥
पिप्पली चेति संचूर्ण्य भागैर्द्विपलिकैः पृथक् ।
शाणमात्राञ्च कस्तूरीं सर्व्वमेकत्र निक्षिपेत् ॥७०॥
भूमौ निखनयेद्भाण्डं ततो जातरसं पिबेत् ।
कतकस्य फलं क्षिप्त्वा रसं निर्म्मलतां नयेत् ॥७१॥
ग्रहणीमरुचिं शूलं श्वास काश भगन्दरान् ।
वातव्याधिं क्षयं छर्द्दिं पाण्डुरोगञ्च कामलाम् ॥७२॥
कुष्ठान्यर्शांसि मेहांश्च मन्दाग्निमुदराणिच ।
शर्करा मश्मरी मूत्रकृच्छ्रन्धातुक्षयञ्जयेत् ॥७३॥
कृशानां पुष्टिजननो वन्ध्यानां पुत्रदः परम् ।[मूलारिष्टः
अरिष्टो दशमूलाख्य स्तेजः शुक्रबलप्रदः ॥७४॥इति दश-

---

अथ द्वादशोध्यायः । [धातुशोधनमारणम्]

स्वर्णताराारताम्राणि नागवङ्गौच तीक्ष्णकम् ।
धातवः सप्त विज्ञेया स्तत स्तान् शोधयेद्बुधः ॥१॥
स्वर्णताराारताम्रायःपत्राण्यग्नौ प्रतापयेत् ।
निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके ॥२॥
गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ।
एवं स्वर्णादि लोहानां विशुद्धिःसम्प्रजायते ॥३॥

नागवल्ली प्रतप्तौ च गालितौ तौ निषेचयेत् ।
त्रिधा त्रिधा विशुद्धिः स्याद्रविदुग्धेन च त्रिधा ॥४॥
[धातुमध्ये स्वर्णमारणम] सुवर्णे द्विगुणं सूतमम्लेन सह मर्दयेत् ।
तद्गोलकसमङ्गन्धं निदध्यादधरोत्तरम् ॥५॥
गोलकञ्च ततो रुद्ध्वा शरावद्दृढसम्पुटे ।
त्रिंशद्वनोपलैर्दद्यात्पुटान्येवञ्चतुर्दश ॥६॥
निरुत्थञ्जायते भस्म गन्धो देयः पुनःपुनः ।
[अपरविधिः] काञ्चने गालिते नागं षोड़शांशेन निक्षिपेत् ॥७॥
चूर्णयित्वा तथाम्लेन घृष्ट्वा कृत्वा च गोलकम् ।
गोलकेन समं गन्धं दत्वा चैवाधरोत्तरम् ॥८॥
शरावसम्पुटे धृत्वा पुटे त्रिंशद्वनोपलैः ।
एवं सप्तपुटैर्हेमनिरुत्थम्भस्म जायते ॥९॥
[अन्यच्च] काञ्चनाररसैर्घृष्ट्वा समं सूतकगन्धकम् ।
कज्जलीं हेमपत्राणि लेपयेत्समया तया ॥१०॥
काञ्चनारत्वचःकल्कै र्मूषायुग्मं प्रकल्पयेत् ।
धृत्वा तत्सम्पुटे गोलं मृण्मूषासम्पुटे च तत् ॥११॥
निधाय सन्धिरोधञ्च कृत्वा संशोष्य कोकिलैः ।
वह्निं खरतरं कुर्यादेवं दद्यात् पुटत्रयम् ॥१२॥
निरुत्थञ्जायते भस्म सर्वकार्य्येषु योजयेत् ।
काञ्चनारप्रकारेण लाङ्गलीहन्ति काञ्चनम् ॥१३॥
ज्वालामुखी तथा हन्त्या-त्तथा हन्ति मनःशिला ।
[अन्यदपि] शिलासिन्दूरयोश्चूर्णं समयोरर्कदुग्धकैः ॥१४॥
सप्तैव भावना दद्या-च्छोषयेच्च पुनःपुनः
ततस्तु गालिते हेम्नि कल्कोऽयं दीयते समः ॥१५॥

पुनर्धमेद्दतितरां यथा कल्को विलीयते ।
एवं वेलात्रयं दद्यात्कल्कं हेममृतिर्भवेत् ॥१६॥
[अन्यच्च] पारावतमलैर्लिम्पे-दथवा कुटजोद्भवैः ।
हेमपत्राणि तेषाञ्च प्रदद्यादन्तरान्तरम् ॥१७॥
गन्धचूर्णं समं धृत्वा शरावयुगसम्पुटे ।
प्रदद्यात्कुक्कुटपुटम्पञ्चभिर्गोमयोपलैः॥१८॥
एवं नवपुटं दद्याद्दशमञ्च महापुटम् ।
त्रिंशद्वनोपलैर्देयं जायते हेमभस्मताम् ॥१९॥
[तारमारणम्]भागैकं तालकं मर्द्यं याममम्लेन केनचित् ।
तेन भागत्रयन्तारपत्राणि परिलेपयेत् ॥२०॥
धृत्वा मूषापुटे रुध्वा पुटे त्रिंशद्वनोपलैः ।
समुद्धृत्य पुनस्तालं दत्वा रुद्धा पुटे पचेत् ॥२१॥
एवं चतुर्दशपुटैस्तारं भस्म प्रजायते ।
[अन्यच्च] स्नुहीक्षीरेण सम्पिष्टं माक्षिकं तेन लेपयेत् ॥२२॥
तालकस्य प्रकारेण तारपत्राणि बुद्धिमान् ।
पुटेश्चतुर्दशपुटैस्तारं भस्म प्रजायते ॥२३॥
[ताम्रमारणम्] सूक्ष्माणि ताम्रपत्राणि क्षत्वा संस्वेदयेद्बुधः ।
वासरत्रयमम्लेन ततः खल्वे विनिक्षिपेत् ॥२४॥
पादांशं सूतकं दत्वा याममम्लेन मर्दयेत् ।
तत उद्धृत्य पत्राणि लेपयेद्द्विगुणेन च ॥२५॥
गन्धकेनाम्लपिष्टेन तस्य कुर्याच्च गोलकम् ।
ततः पिष्टाच मीनाक्षीं चाङ्गेरीं वा पुनर्नवाम् ॥ २६ ॥
तत्कल्केन वहि र्गोलं लेपयेदङ्गुलोन्मितम् ।
धृत्वा तद्गोलकं भाण्डे शरावेण च रोधयेत् ॥२७॥

वालुकाभिः प्रपूर्याथ विभूतिलवणाम्बुभिः ।
दत्वा भाण्डमुखे मुद्रां ततश्चुल्ल्यां विपाचयेत् ॥२८॥
क्रमवृद्धाग्निना सम्यक् यावद्यामचतुष्टयम् ।
स्वाङ्गशीतं समुद्धृत्य मर्दयेत्सूरणद्रवैः ॥२९॥
दिनैकं गोलकं कुर्य्यादर्द्धं गन्धेन लेपयेत् ।
सद्धृतेन ततो मूषां पुटे गजपुटे पचेत् ॥३०॥
स्वाङ्गशीतं समुद्धृत्य मृतं ताम्रं शुभं भवेत् ।
वान्तिं भ्रान्तिं क्लमं रेचं न करोति कदाचन ॥३१॥
[पीतरमारणम्] अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत् ।
समेनारस्य पत्राणि शुद्धान्यम्लद्रवैर्मुहुः ॥३२॥
ततो मूषापुटे धृत्वा पुटेद्गजपुटेन च ।
एवं पुटद्वयेनैव भस्मारं भवति ध्रुवम् ॥३३॥
आरवत् कांस्यमप्येवं भस्मतां याति निश्चितम् ।
अर्कक्षीरवद्राजं स्यात् क्षीरन्निर्गुण्डिका तथा ॥३४॥
ताम्ररीतिध्वनिवधे सम गन्धक-योगतः ।
[नागमारणम्] ताम्बूलीरससम्पिष्टःशिलालेपात्पुनःपुनः ॥३५॥
द्वात्रिंशद्भिःपुटैर्नागो निरुत्थो याति भस्मताम् ।
[अन्यच्च] अश्वत्थ चिंचात्वक्चूर्णं चतुर्थांशेन निक्षिपेत् ॥३६॥
मृत्पात्रे विद्रुते नागे लोहदर्व्या प्रचालयेत् ।
यामैकेन भवेद्भस्म तत्तुल्या च मनःशिला ॥३७॥
काञ्जिकेन द्वयं पिष्ट्वा पचेद्दृढपुटेन च ।
स्वाङ्गशीतं पुनःपिष्ट्वा शिलया काञ्जिकेन च ॥३८॥
पुनःपचेत्शरावाभ्यामेवं षष्टि पुटैर्मृतिः ।
[वङ्गमारणम्] मृत्पात्रे द्राविते वङ्गे चिञ्चाश्वत्थत्वचोरजः ॥३९॥

क्षिप्त्वा क्षिप्त्वा चतुर्थांशमयो-दर्व्या प्रचालयेत् ।
ततो द्वियाममात्रेण वङ्गभस्म प्रजायते ॥४०॥
अथभस्मसमं तालं क्षिप्त्वाऽम्लेन प्रमर्द्दयेत् ।
ततो गजपुटे पक्का पुनरम्लेन मर्द्दयेत् ॥४१॥
तालेन दशमांशेन याम मेकं ततः पुटेत् ।
एवं दशपुटैः पक्वो वङ्गस्तु म्रियते ध्रुवम् ॥४२॥
[लोहमारणम्] शुद्ध-लोहभवञ्चूर्णं पातालगरुडीरसैः ।
मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयम् ॥४३॥
पुटत्रयं कुमार्य्या च कुठारच्छिन्निकाद्रवैः ।
पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत् ॥४४॥
[अन्यच्च]क्षिपेद्द्वादशमासेन दरदं तीक्ष्णचूर्णतः ।
मर्द्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥४५॥
एवं सप्तपुटैर्मृत्युं लोहचूर्णमवाप्नुयात् ।
रसैः कुठारच्छिन्नायाः पातालगरुडीरसैः ॥४६॥
स्तन्येन चार्कदुग्धेन तीक्ष्णस्यैवं मृतिर्भवेत् ।
योगद्वयमाह]सूतकाद्द्विगुणं गन्धं दत्वाकृत्वाच कज्वलीम् ।
द्वयोः समं लोहचूर्णं मर्द्दयेत्कन्यकाद्रवैः ॥४७॥
यामयुग्मं ततः पिण्डं कृत्वा ताम्रस्य पात्रके ।
घर्म्मे धृतोरुवूकस्य पत्रैराच्छादयेद्बुधः ॥४८॥
यामार्द्धेनोष्णता भूयात्धान्यराशौनन्यसेत्ततः ।
दत्वोपरिशरावन्तुत्रिदिनान्ते समुद्धरेत् ॥४९॥
पिष्ट्वाच गालयेद्वस्त्रादेवं वारितरं भवेत् ।
एवं सर्वाणि लोहानि स्वर्णादीन्यपि मारयेत् ॥५०॥
शिलान्धार्कदुग्धाक्ताः स्वर्णाद्याः सर्वधातवः ।

म्रियन्ते द्वादशपुटैः सत्यं गुरुवचो यथा ॥५१॥

अथोपधातु शोधनमारणम्।

माक्षिकं तुत्थकाभ्रं च नीलाञ्जनशिलालकाः।
रसकश्चेति विज्ञेया एते सप्तोपधातवः ॥५२॥

अथ स्वर्णमाक्षिक शोधनमारणम्।

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च।
मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैःपचेत् ॥५३॥
चालयेल्लौहजे पात्रे यावत्पात्रं तु लोहितम्।
भवेत्ततस्तु संशुद्धिं स्वर्णमाक्षिकमृच्छति ॥५४॥
कुलत्थस्य कषायेण घृष्ट्वा तैलेन वा पुटेत्।
तक्रेण वाजमूत्रेण म्रियते स्वर्णमाक्षिकम् ॥५५॥
[तारमाक्षिकशोधनम्]कर्कोटीमेषशृङ्गयुत्थैर्द्रवैर्जम्बीरजैर्दिनम्
भावयेदातपे तीव्रे विमला शुद्धिमृच्छति ॥५६॥
[तुत्थक शोधनम्] विष्ठायां मर्दयेत्तुत्थं मार्जारककपोतयोः।
दशांशं टङ्कणं दत्वा पचेन्मृदु पुटेत्ततः ॥५७॥
पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये।
[अभ्रकशोधनं]कृष्णाभ्रकन्धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत्।
भिन्नपत्रं तु तत् कृत्वा तण्डुलीयाम्लयोर्द्रवैः ॥५८॥
भावयेदष्टयामं तदेवं शुद्ध्यति चाभ्रकम्। इति शोधनम्
कृत्वा धान्याभ्रकं तत्तु शोषयित्वाथ मर्दयेत् ॥५९॥
अर्कक्षीरैर्दिनं खल्वे चक्राकारञ्च कारयेत्।
वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत् ॥६०॥
पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः।
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम् ॥६१॥

म्रियते नात्र सन्देहः सर्वयोगेषु योजयेत् ॥६२॥
तुल्यं घृतं मृताभ्रेण लोह पात्रे विपाचयेत् ।
घृते जीर्णे तदभ्रं तु सर्वयोगेषु योजयेत् ॥६३॥
मृतं त्वभ्रं हरेन्मृत्युं तथा जरा पलितनम् ।
अनुपानैश्च संयुक्तं तत्तद्रोगहरं परम् ॥६४॥
[अथान्यप्रकारः]शुद्धं धान्याभ्रकं मुस्तं शुण्ठी षड्भागयोजितम्।
मर्द्दयेत्काञ्जिकेनैव दिनञ्चित्रकजैः रसैः ॥६५॥
ततो गजपुटे दद्यात्तस्मादुद्धृत्य मर्दयेत् ।
त्रिफला वारिणा तद्वत्पुटेदेवं पुटैस्त्रिभिः ॥६६॥
वलागोमूत्रमुषली तुलसी सूरणद्रवैः ।
मर्दितं पुटितं वह्नौ त्रित्रिवेलं व्रजेन्मृतिम् ॥६७॥
[नीलाञ्जनशोधनं]नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितम् ।
दिनैकमातपे शुद्धं सर्व्वकार्य्येषु योजयेत् ॥६८॥
एवं गैरिककासीसटङ्कणानि वराटिका ।
शङ्खतौरीचकङ्कुष्ठं शुद्धिमायाति निश्चितम् ॥६९॥
[मनःशिलाशोधनम्]पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम्
भावयेत्सप्तधा पित्ते रजायाः शुद्धमृच्छति ॥७०॥
[तालकशुद्धिः] तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके क्षिपेत् ।
दोलायन्त्रेण यामैकं ततः कुष्माण्डजैर्द्रवैः ॥७१॥
तिलतैले पचेद्यामं यामञ्च त्रिफलाजलैः ।
दोला यन्त्रे चतुर्यामं पाच्यं शुध्यति तालकम् ॥७२॥
[रसकशुद्धिः[नरमूत्रेश्च गोमूत्रैः सप्ताहं रसकं पचेत् ।
दोलायन्त्रेण शुद्धिः स्यात्ततः कार्येषु योजयेत् ॥७३॥

[सत्वनिर्गमः]लाचामीनापयश्छागं टङ्कणं मृगशृङ्गकम् ।
पिण्याकं सर्षपाः शिग्रु गुञ्जोर्णागुड़सैन्धवम् ॥७४॥
सर्वतिक्ता घृतं चौद्रं यथा लाभं विचूर्णयेत् ।
एभिर्विमिश्रिताः सर्वे धातवो गाढ़वह्निना ।
मूषाध्माताः प्रजायन्ते मुक्तसत्वा न संशयः ॥७५॥

अथ रत्नानां शोधनमारणम् ।

[आदौवज्रमारणम्]कुलत्थकोद्रवक्वाथे दोलायन्त्रे विपाचयेत्।
व्याघ्रीकन्द गतं वज्रं त्रिदिनं शुद्धिमृच्छति ॥७६॥
तप्तं तप्तं तु तद्वज्रं खरमूत्रे निषेचयेत् ।
पुनस्ताप्यं पुनः सेच्यमेवं कुर्यात् त्रिसप्तधा ॥७७॥
मत्कुणैस्तालकं पिष्ट्वा यावद्भवति गोलकम् ।
तद्गोले निहितं वज्रं तद्गोलस्थान्वितं धमेत् ॥७८॥
सिञ्चयेदश्व-मूत्रेण तद्गोले च चिपेत्पुनः ।
रुध्वा ध्मातं पुनः सेच्यमेवं कुर्यात् त्रि सप्तधा ॥७९॥
एवं च म्रियते वज्रं चूर्णं सर्वत्र योजयेत् ।
[अन्यदपि] हिङ्गु सैन्धव संयुक्ते क्वाथे कौलत्थजे चिपेत् ॥८०॥
तप्तं तप्तं पुनर्वज्रं भूयाच्चूर्णं त्रिसप्तधा ।
[अन्यच्च] मण्डूकं कांस्यजे पात्रे निगृह्य स्थापयेत्सुधीः ॥८१
सभीतो मूत्रयेत्तत्र तन्मूत्रे वज्रमावपेत् ।
तप्तं तप्तं च बहुधा वज्रस्यैवं मृतिर्भवेत् ॥८२॥
[वैक्रान्तमारणम्]वैक्रान्तं वज्रवच्छोध्यं नीलं वा लोहितं तथा।
हयमूत्रे च तत् सिञ्चे त्तप्तं तप्तं द्विसप्तधा ॥८३॥
ततस्तु मेषदुग्धास्तु पञ्चाङ्गे गोलकं चिपेत् ।
घटेमूषापुटे रुध्वा कुर्यादेवं च सप्तधा ॥८४॥

वैक्रान्तं भस्मतां याति वज्रस्थाने नियोजयेत् ॥८५॥

अथ शेषरत्न शोधनमारणम् ।—

स्विदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च ।
मणिमुक्ताप्रवालानि यामैकं शोधनं भवेत् ॥८६॥
कुमार्य्यास्तण्डुलीयेन स्तन्येन च निषेचयेत् ।
प्रत्येकं सप्तवेलं च तप्ततप्तानि कृत्स्नशः ॥८७॥
मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः ।
चणादिविविधवर्णानि म्रियन्ते नात्र संशयः ॥८८॥
उक्तमाक्षिकवन्मुक्ताप्रवालानि च मारयेत् ।
वज्रवत् सर्व्वरत्नानि शोधयेन्मारयेत्तथा ॥८९॥

अथ शिलाजतुशोधनम् ॥

शिलाजतु समानीय ग्रीष्मतप्त-शिलाच्युतम् ।
गोदुग्धै स्त्रिफलाक्वाथैः भृङ्गद्रावैश्च मर्द्दयेत् ॥९०॥
आतपे दिनमेकैकं तच्छुष्कं शुद्धतां व्रजेत् ॥९१॥

अथान्य शिलाजतुकरणप्रकारः ।—

मुख्यां शिलाजतुशिलां सूक्ष्मखण्ड प्रकल्पिताम् ।
निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ॥९२॥
मर्द्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम् ।
स्थापयित्वा च मृत्पात्रे धारयेदातपे खरे ॥९३॥
उपरिस्थं घनं यत् स्यात् तत् क्षिपेदन्यपात्रके ।
धारयेदातपे तस्मादुपरिस्थं घनं नयेत् ॥९४॥
एवं पुनः पुनर्नीत्वा द्विमासाभ्यां शिलाजतुः ।
भूगाल्कायेच्चमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत् ॥९५॥
अधूमं च ततः शुद्धं सर्व्वकर्मसु योजयेत् ।

अधःस्थितं च यच्छेषं तस्मिन्नीरं विनिक्षिपेत् ॥९६॥
विमृद्य धारयेत्, घर्मे पूर्ववच्चैव तन्नयेत् ।
[मण्डूरकरणम्]अक्षाङ्गारैः धमेत्किट्टं लोहजं तन्नवाग्निलैः ।
सेचयेत्तप्ततप्तं च सप्तवारं पुनः पुनः ॥९७॥
चूर्णयित्वा ततः क्वाथैर्द्विगुणै-स्त्रिफलाभवैः ।
आलोड्य भर्जयेद्वह्नौ मण्डुरं जायते वरम् ॥९८॥
[क्षारकल्पना]चीरवृक्षस्य काष्ठानि शुष्काण्यग्नौ प्रदीपयेत् ।
नीत्वा तद्भस्म मृत्पात्रे क्षिप्त्वा नीरे चतुर्गुणे ॥९९॥
विमर्द्य धारयेद्रात्रौ प्रातरच्छं जलं नयेत् ।
तन्नीरं क्वाथयेद्वह्नौ यावत्सर्वं विशुष्यति ॥१००॥
तत्तत् पात्रात्समुल्लिख्य क्षारो ग्राह्यः सितप्रभः ।
चूर्णाभः प्रतिसार्य्यः स्यात् पेयः स्यात्क्वाथवत् स्थितः ॥१०१॥
इति क्षारद्वयं धीमान् युक्तकार्येषु योजयेत् ।

इति श्रीशार्ङ्गधरे द्वादशोऽध्यायः

---

त्रयोदशोऽध्यायः ।

पारदः सर्वरोगाणां जेता पुष्टिकरः स्मृतः ।
सुम्नेन साधितः कुर्यात् संसिद्धिं देहलोहयोः ॥१॥
रसेन्द्रः पारदः सूतो हरजः सूतको रसः ।
मुकुन्दश्चेति नामानि ज्ञेयानि रसकर्मसु ॥२॥
ताम्रताराऽरनागाश्च हेमवङ्गौ च तीक्ष्णकम् ।
कांस्यकं घृतलोहं च धातवो नव ये स्मृताः ॥३॥
सूर्यादीनां ग्रहाणान्ते कथिता नामभिः क्रमात् ।
[रसशोधनम्]राजीरसो नमूषायां रसं क्षिप्त्वा विबन्धयेत् ॥४॥

पश्चेच्च दोलिकायन्त्रे स्वेदयेत् काञ्जिकैस्त्र्यहम् ।
दिनैकं मर्दयेत् सूतं कुमारीसम्भवै र्द्रवैः ॥५॥
तथा चित्रकजैः क्वाथै रसो मर्द्यः प्रयत्नतः ।
काकमाची-रसैस्तद्वद्दिनमेकञ्च मर्दयेत् ॥६॥
त्रिफलाया स्तथा क्वाथै रसो मर्द्यः प्रयत्नतः ।
ततस्तेभ्यः पृथक्कुर्य्यात् सूतं प्रक्षाल्य काञ्जिकैः ॥७॥
ततः क्षिप्त्वा रसं खल्वे रसार्द्धञ्च सैन्धवम् ।
मर्दयेन्निम्बुकरसै-र्दिनमेकमनारतम् ॥८॥
ततोराजीरसोनश्च मुस्यश्च नवसादरः ।
एतैरससमै-स्तद्वत्सूतो मर्द्य-सुषाम्बुना ॥९॥
ततः संशोष्य चक्राभं कृत्वा लिप्ता च हिङ्गुना ।
द्विस्थालीसंपुटे धृत्वा पुरयेल्लवणेन च ॥१०॥
अधःस्थालीं ततो मुद्रां दद्याद् दृढतरां बुधः ।
विशेषाग्निं विधायाधो निषिञ्चेदम्बुनोपरि ॥११॥
ततस्तु कुर्यात्तीव्राग्निं तदधः प्रहरत्रयम् ।
एवं निपत्य यात्यूर्द्ध रसो दोषविवर्जितः ॥१२॥
अथोर्द्ध पिठरीमध्ये लग्नो ग्राह्यो रसोत्तमः ।
[गन्धक शोधनम्] लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्१३।
तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ।
विद्रुतङ्गन्धकं ज्ञात्वा दुग्धमध्ये विनिःक्षिपेत् ॥१४॥
एवंगन्धकशुद्धिः स्यात्सर्व्वकार्य्येषु योजयेत् ।
[दरदशोधनम्] मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्॥१५॥
सप्तवारं प्रयत्नेन शुद्धमायाति निश्चितम् ।
[दरदाद्रसाकृष्टिः] निम्बुरसैःनिम्बपत्ररसैर्वा याममात्रकम्।१६।

घृष्ट्वा दरदमूर्द्धं च पातयेत्सूतयुक्तिवत् ।
ततः शुद्धरसन्तस्मान्नीत्वा कार्य्येषु योजयेत् ॥१७॥
[शुद्धरसस्य मुखकरणम्] कालकूटोवत्सनाभः शृङ्गकश्च प्रदीपनः ।
हालाहलो ब्रह्मपुत्रो हारिद्रः शुक्लकस्तथा ॥१८॥
सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव ।
अर्कसेन्दुड़धत्तूर-लाङ्गली-करवीरका: ॥१९॥
गुञ्जाहिफेना इत्येताः सप्तोपविषजातयः ।
एतैर्विमर्द्दितः सूतश्छिन्नपत्तः प्रजायते ॥२०॥
मुखञ्च जायते तस्य धातूंश्च ग्रसतेतराम् ।
[अन्यदपि] अथवा त्रिकटुक्षारौ राजीलवणपञ्चकम् ॥२१॥
रसोनो नवसारश्च शिग्रुश्चैकत्र चूर्णितैः ।
समांशैः पारदादेतैःजम्बीरेण द्रवेण च ॥२२॥
निम्बुतोयैः काञ्जिकैर्वा सोष्णखल्वे विमर्द्दयेत् ।
अजाशकृत्तुषाग्निं तु गर्त्ते तत् क्षितयं क्षिपेत् ।
तस्योपरि स्थितं खल्वं तप्तखल्वमिदं भवेत् ॥२३॥
अहोरात्रत्रयेण स्याद्रसो धातुचरं मुखम् ।
[अन्यच्च] अथवा विन्दुलीकीटैः रसो मर्द्यस्त्रिवासरम् ।
लवणाम्लैः मुखं तस्य जायते धातुघस्मरम् ॥२४॥
[गन्धकजारणम्] अथकच्छपयन्त्रेण गन्धजारणमुच्यते ।
मृत् कुण्डे निक्षिपेत्तोयं तन्मध्येच शरावकम् ॥२५ ॥
महत् कुण्डपिधानाभं मध्ये मेखलया युतम् ।
लिप्त्वा च मेखलामध्यं चूर्णेनात्र रसं क्षिपेत् ॥२६॥
रसस्योपरि गन्धस्य रजो दद्यात्समांशकम् ।
दत्त्वोपरिशरावञ्च भस्ममुद्रां प्रदीपयेत् ॥२७॥

तस्योपरि पुटन्दद्याच्चतुर्भि गोमयोपलैः।
एवं पुनः पुनर्गन्धं षड्गुणं जारयेद्बुधः ॥२८॥
गन्धे जीर्णे भवेत्सूतस्तीक्ष्णाग्निः सर्वकर्मकृत्।
[अथ रसमारणम्] धूमसारं रसं तोरीं गन्धकं नवसादरम् ॥२९॥
यामैकं मर्दयेदम्लैर्भागं कृत्वा समं समम्।
काचकूप्यां विनिःक्षिप्य ताञ्च मृद्वस्त्रमुद्रया ॥३०॥
विलिप्य परितो वक्त्रं मुद्रां दत्वाच शोषयेत्।
अधः सुच्छिद्रपिठरीमध्ये कूपीं निवेशयेत् ॥३१॥
पिठरीं वालुकापूरै-र्भृत्वाचाकूपिकागलम्।
निवेश्य चूल्यां तदधः कुर्याद्वह्निं शनैः शनैः ॥३२॥
तस्मादप्यधिकं किञ्चित्पावकं ज्वालयेत्क्रमात्।
एवं द्वादशभिर्यामै म्रियते सूतकोत्तमः ॥३३॥
स्फोटयेत् स्वाङ्गशीतं तन्मूर्द्धगं गन्धकं त्यजेत्।
अधस्थं मृतसूतं च सर्वकार्येषु योजयेत् ॥३४॥
[अन्यच्च] अपामार्गस्य वीजानां मूषायुग्मं प्रकल्पयेत्।
तत्सम्पुटे न्यसेत्सूतं मलयूदुग्धमिश्रितम् ॥३५॥
द्रोणपुष्पीप्रसूनानि विडङ्गमिरिमेदकः।
एतच्चूर्णमधोऽर्द्धञ्च दत्वा मुद्रा प्रदीयते ॥३६॥
तं गोलमन्धयेत् सम्यक् मृन्मूषा सम्पुटे सुधीः।
मुद्रां दत्वा शोषयित्वा ततो गजपुटे पचेत् ॥ ३७ ॥
एवमेकपुटे नैव जायते भस्मसूतकम्।
[अन्यदपि] काष्ठोदुम्बरिकादुग्धैः रसं किञ्चिद्विमर्दयेत् ॥३८॥
तद्दुग्धघृष्टहिङ्गोश्च मूषायुग्मं प्रकल्पयेत्।
क्षिप्त्वा तत्सम्पुटे सूतं, तच्च मुद्रां प्रदापयेत् ॥ ३९ ॥

धृत्वा तं गोलकं प्राज्ञोमृन्मूषा सम्पुटेऽधिकम् ।
पचेन्मृदुपुटे नैवं सूतिको याति भस्मताम् ॥ ४० ॥
[अन्यच्च] नागवल्लीरसैर्घृष्टः काकोलीकन्दगर्भितः ।
मृन्मूषासम्पुटे पक्वः सूतो यात्येव भस्मताम् ॥ ४१ ॥
इति रसशोधनमारणाध्यायः ।

---

## चतुर्दशोऽध्यायः ।

[ज्वराङ्कुशोरसः]खण्डितं हारिणंशृङ्गं ज्वालामुख्यारसैः समम्
रुध्वा भाण्डे पचेच्चुल्ल्यां यामयुग्मन्ततो नयेत् ॥१॥
अष्टांशन्त्रिकटु दद्यान्निष्कमात्रं च भक्षयेत् ।
नागवल्लीरसैः सार्द्धं वातपित्तज्वरापहम् ॥ २ ॥
अयं ज्वराङ्कुशोनामरसः सर्व्वज्वरापहः ।
[ज्वरारिरसः]पारदं रसकन्तालं तुल्यं टङ्कणगन्धकम् ॥३॥
सर्वमेतत् समं शुद्धं कारवल्लीरसैर्दिनम् ।
मर्दयेल्लेपयेत्तेन ताम्रपात्रोदरम्भिषक् ॥ ४ ॥
अङ्गुल्यर्द्ध प्रमाणेन ततो रुध्वाच तन्मुखम् ।
पचेत्तं वालुकायन्त्रे चिप्त्वा धान्यानि तन्मुखे ॥ ५ ॥
यदास्फुटन्ति धान्यानि तदासिद्धं विनिर्दिशेत् ।
ततो नयेत्स्वाङ्गशीतं ताम्रपात्रोदराद्भिषक् ॥ ६ ॥
रसं ज्वरारिनामानं विचूर्ण्य मरिचैः समम् ।
मासैकं पर्णखण्डेन भक्षयेन्नाशयेज्ज्वरम् ॥ ७ ॥
त्रिदिनैर्विषमन्तीव्र-मेकद्वित्रिचतुर्थकम् ।
[शीतज्वरारिरसः]तालकं तुत्थकं ताम्रं रसं गन्धं मनः शिलाम्
कर्षंकर्षं प्रयोक्तव्यं मर्दयेत् त्रिफलाम्बुभिः ॥८॥

गोलं न्यसेत् सम्पुटके पुटं दद्यात् प्रयत्नतः ।
ततो नीत्वा-र्कदुग्धेन वच्चीदुग्धेन सप्तधा ।
क्वाथेन दन्त्याः श्यामायाःभावयेत् सप्तधा पुनः ॥९॥
माषमात्रं रसं देयं पश्चाशम्मरिचैर्युतम् ।
गुडञ्च्याणकञ्चैव तुलसीदलयुग्मकम् ॥ १० ॥
भक्षयेत् त्रिदिनं भक्त्या शीतारिर्दुर्लभःपरम् ।
पथ्यं दुग्धोदनन्देयं विषमं शीतपूर्वकम् ॥ ११ ॥
दाहपूर्व्वं हरत्याशु तृतीयकचतुर्थकौ ।
द्व्याह्निकं सततञ्चैव वैवर्ण्यञ्च नियच्छति॥१२॥[पिप्पलीशिवा ।
[शीतज्वरघ्नी गुटिका] भागैकं स्याद्रसाच्छुद्धादेलीयः-
आकारकरभो गन्धःकटुतैलेन शोधितः ॥ १३ ॥
फलानिचेन्द्रवारुण्या-श्चतुर्भागैर्मिता अमी ।
एकत्र मर्दयेच्चूर्णाणी-न्द्रवारुणिकारसैः ॥ १४ ॥
माषोन्मितां गुटीङ्कृत्वा दद्यात् सद्योज्वरे बुधः
छिन्नारसानुपानेन ज्वरघ्नी गुटिका मता ॥ १५ ॥
[लोकनाथरसः] शुद्धोवुभुक्षितः सूतो भागद्वयमितो भवेत् ।
तथा गन्धस्य भागौ द्वौ कुर्यात्कज्जलिकान्तयोः ॥ १६ ॥
सूताच्चतुर्गुणेष्वेव कपर्द्देषु विनिःक्षिपेत् ।
भागैकं टङ्कणं दत्वा गोक्षीरेण विमर्द्दयेत् ॥ १७ ॥
तथा शङ्खस्य खण्डानां भागानष्टौ प्रकल्पयेत् ।
क्षिपेत् सर्वं पुटस्यान्तश्चूर्णलिप्तशरावयोः ॥ १८ ॥
गर्त्ते हस्तोन्मिते धृत्वा पुटेद्गजपुटेन च ।
स्वाङ्गशीतं समुद्धृत्य पिष्ट्वा तत्सर्वमेकतः ॥ १९ ॥
षडगुञ्जासंमितश्चूर्णमेकोनत्रिंशदूषणैः ।

घृतेन वातजे दद्या-न्नवनीतेन पित्तजे ॥ २० ॥
क्षौद्रेण श्लेष्मजे दद्या-दतीसारे क्षये तथा ।
अरुचौ ग्रहणीरोगे कार्श्ये मन्दानले तथा ।
कास श्वासेषु गुल्मेषु लोकनाथ रसम्भिषक् ॥२१॥
तस्योपरि घृतान्नञ्च भुञ्जीत कवलत्रयम् ।
मञ्चे क्षणैकमुत्तानः शयीतानुपधानके ॥२२॥
अनम्लमन्नं सघृतं भुञ्जीत मधुरं दधि ।
प्रायेण जाङ्गलं मांसं प्रदेयं घृतपाचितम् ॥२३॥
सदुग्धभक्तं दद्याच्च जातेऽग्नौ साम्यभोजने ।
सघृतान् मुद्गवटकान् व्यञ्जनेष्ववचारयेत् ॥२४॥
तिलामलककल्केन स्नापयेत्सर्पिषाऽथवा ।
अभ्यञ्जयेत सर्पिषा च स्नानं कोष्णोदकेन च ॥२५॥
क्वचित्तैलं न गृह्णीयान्न विल्वं कार वेल्वकम् ।
वार्त्ताकं शफरीं चिञ्चांत्यजेद्व्यायाम मैथुने ॥२६॥
मद्यं सन्धानकं हिङ्गु शुण्ठीमाषा न्मसूरकान् ।
कूष्माण्डं राजिकाकोपं काञ्जिकञ्चैव वर्जयेत् ॥२७॥
त्यजेद्युक्तनिद्राञ्च कांस्यपात्रे च भोजनम् ।
ककारादि युतं सर्वं त्यजेच्छाकफलादिकम् ॥२८॥
ग्राह्योऽयं लोकनाथस्तु शुभनक्षत्रवासरैः ।
पूर्णातिथौ सिते पक्षे जाते चन्द्रबले तथा ॥२९॥
पूजयित्वा लोकनाथङ्कुमारीं भोजयेत्ततः ।
दानं दत्वा द्विघटिकामध्ये ग्राह्यो रसोत्तमः ॥३०॥
रसाच्चेज्जायते ताप स्तदा शर्करया युतम् ।
सत्वं गुडूच्या गृह्णीया-द्वंशरोचनयायुतम् ॥३१॥

खर्जूरं दाडिमन्द्राक्षा मक्षुखण्डानि खादयेत् ।
अरुचौ निस्तुषन्धान्यं घृतभृष्टं सशर्करम् ॥३२॥
दद्यात्तथाज्वरे धान्यं गुडूचीक्वाथ-माहरेत् ।
उशीर वासकक्वाथं दद्यात्समधु शर्करम् ॥३३॥
रक्तपित्ते कफे श्वासे कासेच ज्वर-संचये ।
अग्नि भृष्टजयाचूर्णं मधुना निशि दीयते ॥३४॥
निद्रानाशेऽतिसारे च ग्रहण्यां मन्दपावके ।
सौवर्चलाभया कृष्णाचूर्णमुष्णोदकैः पिवेत् ॥३५॥
शूलेऽजीर्णे तथा कृष्णा मधुयुक्ता ज्वरे हिता ।
प्लीहोदरे वातरक्ते छर्द्याञ्चैव गुदाङ्कुरे ॥३६॥
नासिकास्रुतरक्ते च रसं दाडिमपुष्पजम् ।
दुर्वायाः स्वरसं नस्यं प्रदद्याच्छर्करान्वितम् ॥३७॥
नागं सगन्धकञ्चैव मरिचञ्च समांशकम् ।
दग्ध्वा कपर्द्दिकानां च चूर्णं चापि समं क्षिपेत् ॥३८॥
पारदं चार्द्धमात्रञ्च पञ्चानन रसः स्मृतः
कोलमज्जां कणां वर्हिपच्छ भस्मसशर्करम् ॥३९॥
मधुना लेहयेच्छर्द्दिं हिक्काकोपस्य शान्तये ।
विधिरेष प्रयोज्यस्तु सर्व्वस्मिन् पोटलीरसे ॥४०॥
मृगाङ्के हेमगर्भेच मौक्तिकाख्ये परेषुच ।
इत्ययं लोकनाथोक्तो रसः सर्वरुजोंजयेत् ॥४१॥
[मृगाङ्कपोटलीरसः]भुर्जवत्तनु पत्राणि हेम्नः सूक्ष्माणि कारयेत्
तुल्यानि तानि सूतेन खल्वे क्षिप्त्वा विमर्द्दयेत् ॥४२॥
काञ्चनार रसेनैव ज्वालामुख्या रसेन वा ।
लाङ्गल्या वा रसैस्तावद् यावद्भवति पिष्टिका ॥४४॥

ततो हेम्न चतुर्थांशं टङ्कणन्तत्र निःक्षिपेत् ।
पिष्टमौक्तिकचूर्णञ्च हेमद्विगुणमावपेत् ॥४५॥
तेषु सर्वसमं गन्धं क्षिप्त्वा चैकत्र मर्द्दयेत् ।
तेषां कृत्वा ततो गोलं वासोभिः परिवेष्टयेत् ॥४६॥
पश्चान्मृदा वेष्टयित्वा शोषयित्वाच धारयेत् ।
शरावसम्पुटस्यान्त स्तञ्च मुद्रां प्रदापयेत् ॥४७॥
लवणा पूरिते भाण्डे धारयेत्तच्च सम्पुटम् ॥४८॥
मुद्रां दत्वा शोषयित्वा वहुभिर्गोमयैः पुटेत् ।
ततः शीते समाकृष्टे गन्धं सूतसमं क्षिपेत् ॥४९॥
दृष्टाच पूर्ववत् खल्वे पुटेद्गजपुटेन च ।
स्वाङ्गशीतन्ततो नीत्वा गुञ्जायुग्मं प्रयोजयेत् ॥५०॥
अष्टभिर्मरिचैर्युक्ता कणात्रययुताथवा ।
विलोक्य देया दोषादीनेकैका रसरक्तिका ॥५१॥
सर्प्पिषा मधुना वापि दद्याद्दोषाद्यपेक्षया ।
लोकनाथसमं पथ्यं कुर्यात् स्वस्थमनाः शुचिः ॥५२॥
श्लेष्माणं ग्रहणीं कासं श्वासं क्षयमरोचकम् ।
मृगाङ्कोऽयं रसोहन्यात्कृशत्वं बलहीनताम् ॥५३॥
[हेमगर्भपोटलीरसः]सूतात्पादप्रमाणेन हेम्नः पिष्टीं प्रकल्पयेत्
तयोः स्याद्द्विगुणो गन्धो मर्द्दयेत्काञ्चनारिणाम् ॥५४॥
कृत्वा गोलं क्षिपेन्मूषा सम्पुटे मुद्रयेत्ततः ।
पचेद्भूधरयन्त्रेण वासरत्रितयं वुधः ॥५५॥
तत उद्धृत्य तत्सर्वं दद्याद्गन्धं च तत्समम् ।
मर्द्दयेदार्द्रकरसैश्चित्रकस्य रसेन च ।
स्थूलपीतवराटौश्च पूरयेत्तेन युक्तितः ॥५६॥

हतस्मादौषधात्कुर्यादष्टमांशेन टङ्कणम् ।
टङ्कणार्द्धं विषं दत्वा पिष्ट्वा स्नेहुण्डदुग्धकैः ।
मुद्रयेत्तेन कल्केन वराटीनां मुखानि च ॥५७॥
भाण्डे चूर्णप्रलिप्ते च धृत्वा मुद्राम्प्रदापयेत् ।
गर्त्ते हस्तोन्मिते धृत्वा पुटेद्गजपुटेन च ॥५८॥
स्वाङ्गशीतं रसं नीत्वा प्रदद्याल्लोकनाथवत् ।
पथ्यं मृगाङ्कवत् देयं त्रिदिनं लवणं त्यजेत् ॥५९॥
यदा च्छर्दिर्भवेत्तस्य दद्याच्छिन्नामृतं तदा ।
मधुयुक्तं तथाग्निप्रकोपे दद्याद्गुडार्द्रकम ॥६०॥
विरेके भर्जिता भङ्गा प्रदेया दधिसंयुता ।
जयेत्कासं श्वासं ग्रहणीमरुचिं तथा ॥६१॥
अग्निञ्च कुरुतेदीप्तिं कफवातं नियच्छति ।
हेमगर्भः परो ज्ञेयः रस पोटलिकारसः ॥६२॥
[द्वितीयहेम पोटलीरसः]रसस्य भागाश्चत्वारस्तावतः कनकस्य च
तयोश्च पिष्टिकां कृत्वा गन्धो द्वादशभागिकः ॥ ६३ ॥
कुर्यात्कज्जलिकां तेषां मुक्ताभागाश्च षोडश ।
चतुर्विंशति शङ्खस्य भागैकं टङ्कणस्य च ॥ ६४ ॥
एकत्र मर्द्दयेत्सर्व्वं पक्वनिम्बुकजैः रसैः ।
कृत्वा तेषां ततो गोलं मूषासम्पुटके न्यसेत् ॥ ६५ ॥
मुद्रान्दत्वा ततोहस्तमात्रे गर्त्ते च गोमयैः ।
पुटे गजपुटे नैव स्वाङ्गशीतं समुद्धरेत् ॥ ६६ ॥
पिष्ट्वा गुञ्जा चतुर्मानं दद्याद्गव्याज्यसंयुतम् ।
एकोनत्रिंशदुन्मानमरिचैः सह दीयते ॥ ६७ ॥
राजते मृण्मये पात्रे काञ्चने चावलेहयेत् ।

लोकानाथसमभ्यर्च्य कुर्यात्प्रयतमानसः ॥ ६८ ॥
कासे श्वासे क्षये वाते कफे ग्रहणिका गदे ।
अतीसारे प्रयोक्तव्या पोटली हेमगर्भिका ॥ ६९ ॥ [मतम् ।
[महाज्वराङ्कुसोरसः] सौभाग्यं त्रिफला व्योषं तालगन्धरसा-
प्रत्येकमेव भागं च जैपालं सप्तभागिकम् ॥७०॥
भृङ्गराजरसेनैव किंशुकस्वरसेन वा ।
यामयुग्मं विमर्द्दाथ कार्य्या गुञ्जोपमावटी ॥७१॥
अजीर्णकण्टकश्चायं रसराजः स उच्यते ।
[महोदधिरसः] शुद्धसूतं विषङ्गन्धं प्रत्येकं शाणसम्मितम् ॥७२॥
धूर्त्तवीजन्त्रिशाणं स्यात्सर्वेभ्यो द्विगुणा भवेत् ।
हेमाह्वा कारयेदेषां चूर्णं सूक्ष्मं प्रयत्नतः ॥७३॥
देयञ्जम्बीरमज्जाभि-श्चूर्णं गुञ्जाद्वयोन्मितम् ।
आर्द्रकस्वरसे वापिज्वरं हन्ति त्रिदोषजम् ॥७४॥
एकाहिकं द्व्याहिकं वा त्र्याहिकं वा चतुर्थकम् ।
विषमञ्च ज्वरं हन्याद्विख्यातोऽयं ज्वराङ्कुशः ॥७५॥
अथ अतीसारे आनन्द भैरवो रसः——
दरदं वत्सलाभञ्च मरिचं टङ्कणङ्कणाम् ॥७६॥
चूर्णयेत्समभागेन रसोह्यानन्दभैरवः ।
गुञ्जैकं वा द्विगुञ्जं वा बलं ज्ञात्वा प्रयोजयेत् ॥७७॥
मधुना लेहयेच्चानु कुटजस्य फलं त्वचम् ।
चूर्णितं कर्षमात्रं स्यात् त्रिदोषोत्थातिसारजित् ॥७८॥
दध्यन्नं दापयेत्पथ्यं गवाजन्तक्रमेव च ।
पिपासायाञ्च [illegible] ं विजया च हिता निशि ॥७९॥ [द्वयम् ।
[लघुसूचिका भैर[illegible]ः] विषं फलमितं सूतः शाणिकश्चूर्णयेत्-

तच्चूर्णं सम्पुटे क्षिप्ता काचलिप्तशरावयोः ।
मुद्रां दत्वा च संशोष्य ततश्चुल्ल्यां निवेशयेत् ॥ ८० ॥
वह्निं शनैः शनैः कुर्य्यात् प्रहरद्वयसंख्यया ।
तत उद्घाट्य तन्मुद्रामुपरिस्थशरावके ॥ ८१ ॥
संलग्नो यो भवेद्धूमस्तं गृह्णीयाच्छनैः शनैः ।
वायुस्पर्शो यथा न स्यात् ततः कूप्यां निवेशयेत् ॥ ८२ ॥
यावत् सूच्या मुखे लग्नं कूप्यानिर्य्याति भेषजम् ।
तावन्मात्रो रसो देयो मूर्च्छिते सन्निपातिनि ॥ ८३ ॥
क्षुरेण प्रच्छिते मूर्द्ध्नि तदङ्गुल्या च घर्षयेत् ।
रक्तभेषजसम्पर्कात् मूर्च्छितोऽपि हि जीवति ॥८४ ॥
तथैव सर्पदंष्टस्तु मृतावस्थोऽपि जीवति ।
यदा तापो भवेत् तस्य मधुरं तत्र दीयते ॥ ८५ ॥
[अथ जलचूड़ारसः] भस्मसूतसमं गन्धं गन्धात्पादं मनःशिला ।
माक्षिकं पिप्पली व्योषं प्रत्येकं शिलया समम् ॥८६ ॥
चूर्णयेद्भावयेत् पित्तैर्मत्स्यमायूरसम्भवैः ।
सप्तधा भावयेच्छुष्कं देयं गुञ्जाद्वयं हितम् ॥८७ ॥
तालपर्णीरसश्चानु पञ्चकोलसृतोऽपि वा
जलचूड़ारसो नाम सन्निपातं नियच्छति ।
जलयोगश्च कर्त्तव्यस्तेन वीर्य्यं भवेद्रसे ॥ ८८ ॥
[अथ पञ्चवक्त्रो रसः] शुद्धं सूतं विषं गन्धं मरिचं टङ्कणं कणां ।
मर्द्दयेद्धत्तूरजैर्द्रावैर्दिनमेकञ्च शोषयेत् ॥ ८९ ॥
पञ्चवक्त्रो रसो नाम द्विगुञ्जः सन्निपातजित् ।
अर्कमूलकषायन्तु सत्र्यूषमनुपाययेत् ॥ ९० ॥
युक्तं दध्योदनं पथ्यं जलयोगश्च कारयेत् ।

रसेनानेन शाम्यन्ति सद्योद्रेष कफोद्भवाः ॥ ९१ ॥
मध्वाद्र्द्रकरसञ्चानु पिवेदग्नि विवृद्धये ।
यथेष्टं घृतमांसाशी शक्तो भवति पावकः ॥ ९२ ॥
[अथ उन्मत्तो रसः] । रसं गन्धकतुल्यांशं धत्तूरफलजद्रवैः ।
मर्द्दयेद्दिनमेकन्तु तत्तुल्यं त्रिकटुं क्षिपेत् ॥ ९३ ॥
उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात् सन्निपातजित् ।
निस्त्वक्जैपालवीजञ्च द्वयनिष्कं विचूर्णयेत् ।
मरिचं पिप्पलीसूतं प्रतिनिष्कं हि मिश्रयेत् ॥ ९४ ॥
भाव्यो जम्बीरजै र्द्रावैः समाहं सुप्रयत्नतः ।
रसोऽयमञ्जने दत्तः सन्निपातं विनाशयेत् ॥ ९५ ॥
[अथ नाराचरसः]॥ सूतं टङ्कणकं तुल्यं मरिचं सूततुल्यकम् ।
गन्धकं पिप्पलीशुण्ठी द्वौ द्वौ भागौ विचूर्णयेत्
सर्वतुल्यं क्षिपेद्दन्तीवीजं निस्तुषितं भिषक् ॥ ९६ ॥
द्विगुञ्जारेचनं सिद्धं नाराचोऽयं महारसः ।
आध्मानमलविष्टम्भमुदावर्त्तञ्च नाशयेत् ॥ ९७ ॥
[अथ इच्छाभेदी रसः] दरदष्टङ्कणं शुण्ठी पिप्पली चैक कर्षिका
हेमाह्वा पलमात्रा स्याद्दन्तीवीजञ्च तत्समम् ॥ ९८ ॥
विचूर्ण्यैकत्र सर्वाणि गोदुग्धेनैव साधयेत् ।
त्रिगुञ्जारेचनं दद्यादिष्टमाध्मानरोगिषु ॥ ९९ ॥
[राजमृगाङ्को रसः] भस्मसूतत्रयो भागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ १०० ॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् ।
वराटीःपूरयेत् तेन छागीक्षीरेण टङ्कणम् ॥ १०१ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तन्निरोधयेत् ।

शुष्कं गजपुटे पक्त्वा चूर्णयेत् स्वाङ्गशीतलम् ॥ १०२ ॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
दशपिप्पलिकाक्षौद्रै रेकोनविंशदूषणैः ॥ १०३ ॥
स घृतं दापयेत् पथ्यं स्त्रीकोपाग्निश्रमांस्त्यजेत् ।
पथ्यं वा लघु मांसानि राजरोगप्रशान्तये ॥ १०४ ॥

[अथ अग्नि रसः] शुद्धं सूतं द्विधा गन्धं कुर्य्यात् खल्वेन कज्जलीं ।
तयोः समं तीक्ष्णचूर्णं मर्द्दयेत् कन्यकाद्रवैः ॥ १०५ ॥
द्वियामान्ते कृतं गोलं ताम्रपात्रे विनिःक्षिपेत् ।
आच्छाद्यैरण्डपत्रेण यामार्द्धेऽत्युष्णता भवेत् ॥ १०६ ॥
धान्यराशौ न्यसेत् पश्चादहोरात्रात् समुद्धरेत् ।
संपिष्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ॥ १०७ ॥
त्रिकटु त्रिफलैलाभिर्जातीफललवङ्गकैः ।
नवभागोन्मितैरेतैः समः पूर्वरसो भवेत् ॥ १०८॥
संचूर्ण्य लेहयेत् क्षौद्रे भक्ष्यं निष्कद्वयं द्वयम् ।
स्वयमग्निरसो नाम्ना क्षयकासनिकृन्तनः ॥ १०९॥

[अथ अमृतार्णव रसः] पारदं गन्धकं शुद्धं मृतलोहञ्च टङ्कणम् ।
रास्नाविडङ्गत्रिफलादेवदारुकटुत्रयम् ॥ ११०॥
अमृतापद्मकं क्षौद्रं विश्वं तुल्यांशचूर्णितम् ।
त्रिगुञ्जं सर्वकासार्त्तः सेवयेदमृतार्णवम् ॥ १११ ॥

[सूर्य्यावर्त्तो रसः] सूतार्द्धो गन्धको मर्द्यो यामैकं कन्यकाद्रवैः ।
द्वयोस्तुल्यं ताम्रपत्रं पूर्वकल्केन लेपयेत् ॥ ११२ ॥
दिनैकं स्थालिकायन्त्रे पक्वमादाय चूर्णयेत् ।
सूर्य्यावर्त्तरसो ह्येष द्विगुञ्जः श्वासजिद्भवेत् ॥ ११३ ॥

[स्वच्छन्दभैरवो रसः] शुद्धं सूतं मृतं लोहं ताप्यं गन्धकतालकम् ।

पथ्याग्निमन्थनिर्गुण्डी चूषणं टङ्कणं विषम्॥ ११४ ॥
तुल्यांश मर्द्दयेत् खल्वे दिनं निर्गुण्डिकाद्रवैः।
गुण्डीद्रावैर्दिनैकन्तु द्विगुञ्जावटकीकृतम्॥ ११५ ॥
भक्षयेद्वातरोगार्त्तो नाम्ना स्वच्छन्दभैरवम्।
रास्नामृतादेवदारु शुण्ठीवातारिजं शृतम्।
सगुग्गुलं पिबेत्कोष्णमनुपानं सुखावहम्॥ ११६ ॥
[हंसपाटलो रसः] दग्ध्वा कपर्द्दिकात् पिष्ट्वा चूषणं टङ्कणं विषं
गन्धकं शुद्धसूतञ्च तुल्यं जम्बीरजैर्द्रवैः॥ ११७ ॥
मर्द्दयेत् भक्षयेन्माषं मरिचाज्यं लिहेदनु।
निहन्ति ग्रहणीरोगं पथ्यं तक्रोदनं हितम्॥ ११८ ॥
[अथ त्रिविक्रमो रसः]॥ मृतताम्रमजाक्षीरैः पाच्यं तुल्यैर्गते द्रवे
तत्ताम्रं शुद्धसूतञ्च गन्धकञ्च समं समम्॥ ११९ ॥
निर्गुण्डी स्वरसैर्मर्द्यं दिनन्तद्गोलमन्धयेत्।
यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम्॥ १२० ॥
वीजपूरकमूलन्तु सजलञ्चानुपानतः।
रसस्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत्॥ १२१॥
[महातालेश्वरो रसः] तारन्ताप्यशिलासूतं शुद्धं सैन्धवटङ्कणम्।
समांशं चूर्णयेत् खल्वे सूताद्‌ द्विगुणगन्धकम्॥ १२२॥
गन्धतुल्यं मृतं ताम्रं जम्बीरैर्दिनपञ्चकम्।
मर्द्यं षड्भिः पुटैः पाच्यं भूधरे सम्पुटोदरे॥ १२३ ॥
पुटे पुटे द्रवैर्मर्द्यं सर्वमेतत् तु षट् पलम्।
द्विपलं मरिचं ताम्रं लोहभस्म चतुःपलम्॥ १२४॥
जम्बीराम्लेन तत् सर्वन्दिनं मर्द्यं पुटेल्लघु।
त्रिंशदंशं विषं चास्य क्षिप्त्वा सर्वं विचूर्णयेत्॥ १२५ ॥

माहिषाज्येन संमिश्रं निष्कार्द्धं भक्षयेत्सदा ।
मध्वाज्यैर्वाकुचीचूर्णं कर्षमात्रं लिहेदनु
सर्वं कुष्टं निहन्त्याशु महातालेश्वरो रसः ॥ १२६ ॥
[कुष्ठकुठारो रसः] भस्म सूतसमं गन्धं मृतायस्ताम्रगुग्गुलुः ।
त्रिफलाश्च महानिम्बश्चित्रकश्च शिलाजतु ॥ १२७ ॥
इत्येतच्चूर्णितं कुर्यात् प्रत्येकं प्रस्थ षोडश ।
चतुःषष्टिकरञ्जस्य वीजं चूर्णं प्रकल्पयेत् ॥ १२८ ॥
चतुः षष्टिमृतं चाभ्रमध्वाज्याभ्यां विलोडयेत्
स्निग्धभाण्डे धृतं खादेत् द्विनिष्कं सर्वकुष्टनुत् ।
रसः कुष्ठकुठारोऽयं गलकुष्टनिवारणः ॥ १२९ ॥
[ उदयादित्यो रसः ] शुद्धसूतं द्विधा गन्धं मर्द्यं कन्याद्रवैर्दिनं ।
तद्गोलं पिठरीमध्ये ताम्रपात्रेण रोधयेत् ॥१३० ॥
सूतकात्त्रिगुणेनैव शुद्धेनाधोमुखेन च ।
पार्श्वे भस्म निधायाथ पात्रोर्द्ध्वे गोमयञ्जलम् ॥ १३१ ॥
किञ्चित्किञ्चित्प्रदातव्यं चुल्ल्यां यामद्वयं पचेत् ।
चण्डाग्निना तदुद्धृत्य स्वाङ्गशीतं विचूर्णयेत् ॥ १३२ ॥
काष्ठोदुम्बरिकावह्निस्त्रिफलाराज वृक्षकम् ।
विडङ्गं वाकुचीवीजं क्वाथयेत्तेन भावयेत् ॥ १३३ ॥
दिनैकमुदयादित्यो रसो देयो द्विगुञ्जकः ।
विचर्चिकादद्रुकुष्ठं श्वेतकुष्ठञ्च नाशयेत् ॥ १३४ ॥
अनुपानञ्च कर्त्तव्यं वाकुचीफलचूर्णकम् ।
खदिरस्य कषायेण समेन परिपाचितम् ॥ १३५॥
त्रिशाणन्तद्रवां चीरैः क्वाथैर्वा त्रैफलैः पिबेत् ।
त्रिदिनान्ते भवेत् स्फोटः सप्ताहाद्वा किलासकम् ॥१३६॥

नीलीं गुञ्जाञ्च कासीसं धत्तूरं हंसपादिकाम् ।
सूर्यभक्ताञ्च चाङ्गेरीं पिष्ट्वा मूलात् प्रलेपयेत् ॥ १३७ ॥
स्फोटस्थानप्रशान्त्यर्थं सप्तरात्रं पुनः पुनः ।
श्वेतकुष्ठं निहन्त्याशु साध्यासाध्यं न संशयः ॥ १३८ ॥
अपरः श्वित्रलेपोऽपि कथ्यतेऽत्र भिषग्मतः ।
गुञ्जाफलानां चूर्णं च लेपितं श्वेतकुष्ठनुत्
शिलाया मार्गभस्मापि लिप्ता श्वित्रं विनाशयेत् ॥ १३९॥
[अथ सर्वेश्वरो रसः] शुद्धं सूतं चतुर्गन्धं पलं यामं विचूर्णयेत् ।
मृतताम्राभ्रलोहानां दरदञ्च पलं पलम् ॥ १४० ॥
सुवर्णं रजतं चैव प्रत्येकं दशनिष्ककम् ।
माषैकं मृतवज्रं च तालसत्वं पलद्वयम् ॥ १४१ ॥
जम्बीरोन्मत्तवासाभिः स्नुह्यर्कं विषमुष्टिभिः ।
मर्द्यं हयारिजैर्द्रावैः प्रत्येकेन दिनं दिनम् ॥ १४२ ॥
एवं सप्तदिनं मर्द्यं तद्गोलं वस्त्र-वेष्टितम् ।
वालुकायन्त्रगं स्वेद्यं त्रिदिनं लघुवह्निना ॥ १४३ ॥
आदाय चूर्णयेत् श्लक्ष्णं पलैकं योजयेद्विषम् ।
द्विपलं पिप्पलीचूर्णं इत्थं सर्वेश्वरो रसः ॥ १४४ ॥
द्विगुञ्जो लिह्यते क्षौद्रैः सुप्तिमण्डलकुष्ठनुत् ।
वाकुचीदेवकाष्ठञ्च कर्षमात्रं सुचूर्णयेत्
लिह्येदेरण्डतैलात्तमनुपानं सुखावहम् ॥ १४५ ॥
[स्वर्णक्षीरीरसः] हेमाह्वां पञ्चपलिकां क्षिप्ता तक्रघटे पचेत् ।
तक्रे जीर्णे समुद्धृत्य पुनः क्षीरघटे पचेत् ॥ १४६ ॥
क्षीरे जीर्णे समुद्धृत्य क्षालयित्वा विशोषयेत् ।
तच्चूर्णितं पञ्चपलं मरिचानां पलद्वयम् ॥ १४७॥

पलैकं मूर्च्छितं सूतमेकीकृत्वा तु भक्षयेत् ।
निष्कैकं सप्तकुष्ठार्तः स्वर्णक्षीरीरसो ह्ययम् ॥ १४८ ॥
[ मेहबद्धो रसः] भस्म सूतं मृतं कान्तं मुण्डभस्मशिलाजतु ।
शुद्धं ताप्यं शिलाव्योषं त्रिफलां कोलबीजकम् ॥ १४९ ॥
कपित्थरजनीचूर्णं भृङ्गराजेन भावयेत् ।
विंशद्वारं विशोष्याथ मधुयुक्तं लिहेत् सदा ॥ १५० ॥
निष्कमात्रो हरेन्मेहान् मेहबद्धो रसो महान् ।
महानिम्बस्य बीजानि पिष्ट्वा षट्सम्मितानि च ॥ १५१ ॥
पलं तण्डुलतोयेन घृतनिष्कद्वयेन च ।
एकीकृत्य पिबेच्चानुहन्ति मेहं चिरन्तनम् ॥ १५२ ॥
[अथ वह्निरसः] चतुःसूतस्य गन्धाष्टौ रजनी त्रिफला शिवा ।
प्रत्येकञ्च द्विभागं स्यात् त्रिवृज्जैपालचित्रकम् ॥ १५३ ॥
प्रत्येकञ्च त्रिभागं स्याच्चूर्णदन्ती च जीरकम् ।
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ॥ १५४ ॥
जयन्तीस्नुक्पयो भृङ्गवह्निवातारितैलकैः ।
प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् ॥ १५५ ॥
महावह्निरसो नाम निष्कमुष्णजलैः पिबेत् ।
विरेचनं भवेत्तेन नक्तभक्तं ससैन्धवम् ॥ १५६ ॥
दिनान्ते दापयेत्पथ्यं वर्जयेच्छीतलं जलम् ।
सर्वोदरहरः प्रोक्तो मूढ़वातहरः परः ॥ १५७ ॥
[विद्याधरो रसः] गन्धकं तालकं ताप्यं मृतताम्रं मनःशिला ।
शुद्धं सूतञ्च तुल्यांशं मर्दयेत् भावयेद्दिनम् ॥ १५८ ॥
पिप्पल्यास्तु कषायेण वज्रीक्षीरेण भावयेत् ।
निष्कार्द्धं भक्षयेत् क्षौद्रैर्गुल्मं प्लीहादिकं जयेत्

रसो विद्याधरो नाम गोमूत्रञ्च पिबेदनु ॥ १५९ ॥
[अथ त्रिनेत्रो रसः] टङ्कणं हारितं शृङ्गं स्वर्णं शुल्वं मृतं रसं ।
दिनैकमार्द्रकद्रावैर्मर्द्यं कृत्वा पुटं पचेत् ॥ १६० ॥
त्रिनेत्राख्यो रसः सोऽयं माषं मध्वाज्यकैर्लिहेत् ।
सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु
पङ्क्तिशूलहरः ख्यातो मासमात्रान्न संशयः ॥ १६१ ॥
[शूलगजकेसरी रसः] शुद्धं सूतं द्विधा गन्धं यामैकं मर्दयेद् दृढ़म् ।
द्वयोस्तुल्यं शुद्धताम्रं संपुटं तन्निरोधयेत् ॥ १६२ ॥
उर्द्धाधो लवणं दत्त्वा मृद्भाण्डे धारयेद्भिषक् ।
ततो गजपुटे पक्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ १६३ ॥
संपुटं चूर्णयेत् सूक्ष्मं पर्णखण्डे द्विगुञ्जकम् ।
भक्षयेत् सर्वशूलार्तो हिङ्गु शुण्ठी च जीरकम् ॥ १६४ ॥
सौवर्चलं विड़ङ्गानि कर्षमुष्णजलैः पिबेत् ।
असाध्यं नाशयेच्छूलं रसः स्यात् स्थूलकेसरी ॥ १६५ ॥
[अग्नितुण्डावटीरसः] शुद्धं सूतं विषं गन्धं अजमोदां फलत्रयम्
स्वर्जक्षार-यवक्षारे वह्निसैन्धवजीरकम् ॥ १६६ ॥
सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं समम् ।
विषमुष्टिं सर्वतुल्यं जम्बीराम्लेन मर्दयेत् ॥ १६७ ॥
मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये ।
पथ्या शुण्ठी गुड़ञ्चानुपलार्द्धं भक्षयेत् सदा
अग्नितुण्डा वटी ख्याता सर्वरोगकुलान्तकृत् ॥ १६८ ॥
[अजीर्णकण्टको रसः] शुद्धसूतं विषं गन्धं समं मर्द्यं विचूर्णयेत् ।
मरिचं सर्वतुल्यांशं कण्टकार्य्याः फलद्रवैः ।
मर्द्दयेत् भावयेत् सर्वमेकविंशतिवारकम् ॥ १६९ ॥

वटीकुञ्जात्रयं खादेत् सर्व्वाजीर्णप्रशान्तये ।
अजीर्णकण्टकः सोऽयं रसो हन्ति विसूचिकाम् ॥ १७० ॥
[मन्थानभैरवो रसः] मृतं सूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम् ।
सैन्धवं गन्धकं तालं कटुकीं चूर्णयेत् समम् ॥ १७१॥
पुनर्नवादेवदालीनिर्गुण्डीतण्डुलीयकैः ।
तिक्ताकोशातकीद्रावै र्दिनैकं मर्दयेद् दृढम् ॥ १७२ ॥
माषमात्रं लिहेत् चौद्रैः रसो मन्थानभैरवः ।
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु ॥ १७३ ॥
[वातनाशनो रसः]सूतहाटकवज्राणि ताम्रं लोहञ्च माक्षिकम् ।
तालं नीलाञ्जनन्तु त्यमधिफेनं समांशकम् ॥ १७४ ॥
पञ्चानां लवणानाञ्च भागमेकं विमर्दयेत् ।
वज्रीचीरैर्दिनैकन्तु रुध्वाह्नौ भूधरे पचेत् ॥ १७५ ॥
माषैकमार्द्रकद्रावैर्लेहनाद्वातनाशनम् ।
पिप्पलीमूलकक्वाथं सकृष्णमनुपाययेत् ।
सर्व्वान् वातविकारांस्तु निहन्त्या चेपकादिकम् ॥ १७६ ॥
[कनकसुन्दरो रसः]कनकस्याष्टशाणाः स्युः सूतो द्वादशभिर्मतः
गन्धोऽपि द्वादश प्रोक्तः ताम्रशाणद्वयोन्मितम् ॥ १७७ ॥
अभ्रकं स्याच्चतुःशाणं माक्षिकञ्च द्विशाणिकम् ।
वंशो द्विशाणः सौवीरं त्रिशाणं लोहमष्टकम् ॥ १७८ ॥
विसं त्रिशाणिकं कृत्वा लाङ्गलीपलसम्मिता ।
मर्द्दयेद्दिनमेकं तु रसै रम्लफलोद्भवैः ॥ १७९ ॥
दद्यान्मृदुपुटं वह्नौ ततः सूक्ष्मं विचूर्णयेत् ।
माषमात्रो रसो देयः सन्निपाते सुदारुणे ॥ १८० ॥
आर्द्रकस्वरसेनैव रसो न स्वरसेन वा ।

रसो विद्याधरो नाम गोमूत्रञ्च पिबेदनु ॥ १५९ ॥

[अथ त्रिनेत्रो रसः] टङ्कणं हारितं शुद्ध' स्वर्णं शुल्व' मृतं रसं ।

दिनैकमार्द्रकद्रावैर्मर्द्यं रुद्धा पुटं पचेत् ॥ १६० ॥

त्रिनेत्राख्यो रसः सोऽयं माषं मध्वाज्यकैर्लिहेत् ।

सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु

पङ्क्तिशूलहरः ख्यातो मासमात्रान्न संशयः ॥ १६१ ॥

[शूलगजकेसरी रसः] शुद्ध' सूतं द्विधा गन्ध' यामैकं मर्दयेद्दृढ़म् ।

द्वयोस्तुल्यं शुद्धताम्र' संपुटं तन्निरोधयेत् ॥ १६२ ॥

ऊर्द्धाधो लवणं दत्त्वा मृद्भाण्डे धारयेद्भिषक् ।

ततो गजपुटे पक्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ १६३ ॥

संपुटं चूर्णयेत् सूक्ष्म' पर्णखण्डे द्विगुञ्जकम् ।

भक्षयेत् सर्वशूलार्त्तो हिङ्गु शुण्ठी च जीरकम् ॥ १६४ ॥

सौवर्चलं विडङ्गानि कर्षमुष्णजलैः पिबेत् ।

असाध्य' नाशयेच्छूलं रसः स्यात् शूलकेसरी ॥ १६५ ॥

[अग्नितुण्डावटीरसः] शुद्ध' सूतं विषं गन्ध' अजमोदां फलत्रयम्

स्वर्जक्षार-यवक्षारे वह्निसैन्धवजीरकम् ॥ १६६ ॥

सौवर्चलं विडङ्गानि सामुद्र' त्र्यूषणं समम् ।

विषमुष्टि' सर्वतुल्य' जम्बीराम्लेन मर्दयेत् ॥ १६७ ॥

मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये ।

पथ्या शुण्ठी गुड़ञ्चानुपलार्द्धं भक्षयेत् सदा

अग्नितुण्डा वटी ख्याता सर्वरोगकुलान्तकृत् ॥ १६८ ॥

[अजीर्णकण्टको रसः] शुद्धसूतं विषं गन्धं समं मर्द्यं विचूर्णयेत् ।

मरिचं सर्वतुल्यांशं कण्टकार्य्याः फलद्रवैः ।

मर्द्दयेत् भावयेत् सर्वमेकविंशतिवारकम् ॥ १६९ ॥

वटीकुञ्जात्रयं खादेत् सर्वाजीर्णप्रशान्तये ।
अजीर्णकण्टकः सोऽयं रसो हन्ति विसूचिकाम् ॥ १७० ॥
[मन्थानभैरवो रसः] मृतं सूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम् ।
सैन्धवं गन्धकं तालं कटुकीं चूर्णयेत् समम् ॥ १७१॥
पुनर्नवादेवदालीनिर्गुण्डीतण्डुलीयकैः ।
तिक्तकोशातकीद्रावै र्दिनैकं मर्दयेद्दृढ़म् ॥ १७२ ॥
माषमात्रं लिहेत् चौद्रैः रसो मन्थानभैरवः ।
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु ॥ १७३ ॥
[वातनाशनो रसः]सूतहाटकवज्राणि ताम्रं लोहञ्च माक्षिकम् ।
तालं नीलाञ्जनन्तु त्थमब्धिफेनं समांशकम् ॥ १७४ ॥
पञ्चानां लवणानाञ्च भागमेकं विमर्दयेत् ।
वज्रीचीरैर्दिनैकन्तु रुध्वाहो भूधरे पचेत् ॥ १७५ ॥
माषैकमार्द्रकद्रावैर्लेहनाद्वातनाशनम् ।
पिप्पलीमूलकक्वाथं सकृष्णमनुपाययेत् ।
सर्वान् वातविकारांस्तु निहन्त्या चेपकादिकम् ॥ १७६ ॥
[कनकसुन्दरो रसः]कनकस्याष्टशाणाः स्युः सूतो द्वादशभिर्मतः
गन्धोऽपि द्वादश प्रोक्तः ताम्रशाणद्वयोन्मितम् ॥ १७७ ॥
अभ्रकं स्याच्चतुःशाणं माक्षिकञ्च द्विशाणिकम् ।
वंशो द्विशाणः सौवीरं त्रिशाणं लोहमष्टकम् ॥ १७८ ॥
विसं त्रिशाणिकं कृत्वा लाङ्गलीपलसम्मिता ।
मर्द्दयेद्दिनमेकं तु रसै रम्लफलोद्भवैः ॥ १७९ ॥
दद्यान्मृदुपुटं वह्नौ ततः सूक्ष्मं विचूर्णयेत् ।
माषमात्रो रसो देयः सन्निपाते सुदारुणे ॥ १८० ॥
आर्द्रकस्वरसेनैव रसो न स्वरसेन वा ।

किलासं सर्वकुष्ठानि विसर्पञ्च भगन्दरम् ॥
ज्वरञ्ज्वरमजीर्णञ्च जयेद्रोगहरो रसः ॥ १८१ ॥

अथ सन्निपातभैरवो रसः ॥

रसो गन्धस्त्रिभिः कर्षैः कुर्य्यात् कज्जलिकान्तयोः।
ताम्रतारारवङ्गा हि सारश्चैकैककार्षिकाः ॥ १८२ ॥
अग्निगुज्वालामुखीशुण्ठीविल्वैर्भस्तण्डुलीयकान् ।
प्रत्येकं स्वरसैः कुर्य्याद् याममेकं विमर्दयेत् ॥ १८३ ॥
कृत्वा गोलं दृतं वस्त्रैर्लवणापूरितैर्न्यसेत् ।
काचभाण्डे ततः स्थाल्यां काचकूपीं निवेशयेत् ॥ १८४ ॥
वालुकाभिः प्रपूर्य्याथ वह्निर्यामद्वयं भवेत् ।
तत उद्धृत्य तं गोलं चूर्णयित्वा विमिश्रयेत् ॥ १८५ ॥
प्रवालचूर्णकर्षेण शाणमात्रविषेण च ।
कृष्णसर्पस्य गरलैर्द्विवेलं भावयेत् तथा ॥ १८६ ॥
तगरं मुषली मांसी हेमाह्वा वेतसः कणा ।
नीलिनीपत्रकश्चैलाचित्रकश्च कुवेरकः ॥ १८७ ॥
शतपुष्पा देवदाली धत्तूरामत्स्यमुण्डिका ।
मधूकजाती मधुना रसैरेषां विमर्दयेत् ॥ १८८ ॥
प्रत्येकमेकवेलञ्च ततः संशोष्य धारयेत् ।
वीजपूरार्द्रकद्रावैर्मरिचैः षोडशोन्मितैः ॥ १८९ ॥
रसो द्विगुञ्जप्रमितः सन्निपातेषु दीयते ।
प्रसिद्धोऽयं रसो नाम्ना सन्निपातस्य भैरवः ॥ १९० ॥
[ ग्रहणीकपाटः ] तारमौक्तिकहेमानि सारश्चैकैकभागिकाः ।
द्विभागो गन्धकः सूतस्त्रिभागो मर्द्दयेदिमान् ॥ १९१ ॥
कपित्थस्वरसैर्गाढं मृगशृङ्गे ततः क्षिपेत् ।

पुटेमध्य पुटेनैव तत उद्धृत्य मर्दयेत् ॥ १९२ ॥
वलारसैः सप्तवेलमपामार्गरसैस्त्रिधा ।
लोध्रप्रतिविषामुस्तधातकीन्द्रयवा मृताः ॥ १९३ ॥
प्रत्येकमेतत् स्वरसैः भावना स्यात् त्रिधा त्रिधा ।
माषमात्रो रसो देयो मधुना मरिचैस्तथा ॥ १९४ ॥
हन्यात् सर्वानतीसारान् ग्रहणीं सर्वजामपि ।
कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः ॥ १९५ ॥
[अथ ग्रहणीवज्रकपाटः] मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणं
अग्निमन्थं वचां कुर्य्यात् सूततुल्यानि मात्रधीः ॥ १९६ ॥
ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्दयेत् ।
त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत् ॥ १९७ ॥
लोहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत् ।
अधो वह्निं शनैः कुर्य्याद् यामार्द्धं तत उद्धरेत् ॥ १९८ ॥
रसतुल्यां प्रतिविषां दद्यान्मोचरसं तथा ।
कपित्थविजयाद्रावैर्भावयेत् सप्तधा भिषक् ॥ १९९ ॥
धातकीन्द्रयवामुस्तलोध्रं विल्वं गुडूचिका ।
एतद्रसैर्भावयित्वा वेलैकैकं च शोषयेत् ॥ २०० ॥
रसं वज्रकपाटाख्यं शाणैकं मधुना लिहेत् ।
वह्निं शुण्ठीं विडं विल्वं लवणं चूर्णयेत् समम् ।
पिबेदुष्णाम्बुना चानु सर्वजां ग्रहणीं जयेत् ॥ २०१ ॥
[मदनकामदेवो रसः] तारं वज्रं सुवर्णञ्च ताम्रसूतकगन्धकम् ।
लोहं क्रमविवृद्धानि कुर्य्यादेतानि मात्रया ॥ २०२ ॥
विमर्द्य कन्यकाद्रावैर्न्यसेत् काचमये घटे ।
विमुद्रापिठरीमध्ये धारयेत् सैन्धवाहृते ॥ २०३ ॥

पिठरीं मुद्रयेत् सम्यक् ततश्चुल्यां निवेशयेत् ।
वह्निं शनैः शनैः कुर्य्याद्दिनैकं तत उद्धरेत् ॥ २०४ ॥
स्वाङ्गशीतञ्च संचूर्ण्य भावयेदर्कदुग्धकैः ।
अश्वगन्धा च काकोली वानरी मुशली वरा ॥ २०५ ॥
त्रिस्त्रिर्वेलं रसै रासां शतावर्य्याश्च भावयेत् ।
पद्मकन्दकसेरूणां रसैः कासस्य भावयेत् ॥ २०६ ॥
कस्तूरीव्योषकर्पूरकङ्कोलैलालवङ्गकम् ।
सर्वचूर्णादष्टमांशं एतच्चूर्णं विमिश्रयेत् ॥ २०७ ॥
सर्वैः समां शर्कराञ्च दत्त्वा शाणोन्मितां पिबेत् ।
गोदुग्धद्विपलेनैव मधुराहारसेवकः ॥ २०८ ॥
अस्य प्रभावात् सौन्दर्यं बलं तेजोऽभिवर्द्धते ।
तरुणी रमयेद्बह्वीर्नच हानिः प्रजायते ॥ २०९ ॥

कन्दर्पसुन्दरो नाम रसः ॥

सूतो वज्रमहिर्मुक्ता तारहेमासिताभ्रकम् ।
रसैः कर्षांशिकानेतान् मर्दयेदिरिमेदजैः ॥ २१०
प्रवालचूर्णगन्धञ्च द्विद्विकर्षैर्विमिश्रयेत् ।
ततोऽश्वगन्धास्वरसैर्विमर्द्य मृगशृङ्गके ॥ २११ ॥
क्षिप्त्वा मृत्पुटे पक्त्वा भावयेद्वातकीरसैः ।
काकोलीमधुकं मांसी बलात्रयविशेषङ्कृदम् ॥ २१२ ॥
द्राक्षापिप्पलवन्दाकं वाणः पर्णीचतुष्टयम् ।
परूषकं कसेरुञ्च मधुकं वानरी तथा ॥ २१३ ॥
भावयित्वा रसैरेषां शोषयित्वा विचूर्णयेत् ।
एलात्वक्पत्रकं मांसी लवङ्गागुरुकेसरम् ॥ २१४ ॥
मुस्तं मृगमदः कृष्णजलं चन्द्रञ्च मिश्रयेत् ।

एतच्चूर्णं माषमितं रसं कन्दर्पसुन्दरम् ॥ २१५ ॥
खादेत् माषमितं रात्रौ सिता धात्री विदारिका ।
एतासां कर्षचूर्णेन सर्पिःकर्षेण संयुतम् ॥ २१६ ॥
तस्यानु द्विपलं क्षीरं पिबेत् सुखितमानसः ।
रमणी रमयेद्बह्वीर्न हानिं क्वापि गच्छति ॥ २१७ ॥
[ लोहरसायनम् ] शुद्धे रसेन्द्रभागैके द्विभागं शुद्धगन्धकम् ।
क्षिपेत्कज्जलिकां कुर्यात् तत्र तीक्ष्णभवं रजः ॥ २१८ ॥
क्षिप्त्वा कज्जलिकातुल्यं प्रहरैकं विमर्द्दयेत् ।
ततः कन्याद्रवे घर्मे त्रिदिनं परिमर्द्दयेत् ॥ २१९ ॥
ततः सञ्जायते तस्य सोष्मो धूमोद्गमो महान् ।
अथ तं पिण्डितं कृत्वा ताम्रपात्रे निधापयेत् ॥ २२० ॥
मध्ये धान्य कुशूलस्य त्रिदिनं धारयेद्बुधः ।
उद्धृत्य धारयेत् खल्वे क्षिप्त्वा घर्मे निधाय च ॥ २२२ ॥
रसैः कुठारच्छिन्नाया स्त्रिवेल म्परिभावयेत् ।
संशोष्य घर्मे क्वाथैश्च भावयेत् त्रिकटो स्त्रिशः ॥ २२३ ॥
वासामृता चित्रकानां रसै र्भाव्यं पृथक् त्रिशः ।
लोहपात्रे ततः क्षिप्त्वा भावयेत् त्रिफलाजलैः ॥ २२४ ॥
निर्गुण्डीदाडिमत्वग्भिर्वासा भृङ्गकुरण्टकैः ।
पलाश कदलीद्रावै र्बीजकस्य शृतेन च ॥ २२५ ॥
नीलिका लम्बुषाद्रावैर्व्वूलफलिका-रसैः ।
भावयेत् त्रि त्रिवेलञ्च ततो नागवलारसैः ॥ २२६ ॥
शतावरीगोक्षुरभिः पातालगरुडीद्रवैः ।
त्रि त्रिवेलं यथा लाभं भावयेदेभि रौषधैः ॥ २२७ ॥
ततः प्रात र्लिहेत्क्षौद्रमधुभ्यां कोलमात्रकम् ।

पलमात्वला ह्यार्थं पिबेदस्या-गुपानकम् ॥ २२८ ॥
मासत्रयं प्रीलितं स्यादुलीपलित नाशनम् ।
मन्दाग्निं श्वासकासौ च पाण्डुतां कफमारुतौ ॥ २२९ ।
पिप्पली मधुसंयुक्तं हन्यादेतन्न संशयः ।
वातास्रं मूत्रदोषांश्च ग्रहणी गुदजां रुजम् ॥ २३० ॥
अण्डवृद्धिञ्जयेदेत च्छिन्नासत्व मधुप्लुतम् ।
बलवर्णकरं वृष्यमायुष्यं परमं स्मृतम् ॥ २३१ ॥
जयेत् सर्वामयान् कालादिदं लोहरसायनम् ।
प्रक्षेप्यौषध मेतस्मिन् प्रदद्यात् कोलमात्रकम् ॥ २३२ ॥
कूष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा ।
मद्य मम्लरसञ्चैव त्यजे ल्लोहस्य सेवकः ॥ २३३ ॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण विरचिते
चिकित्सास्थाने रसकल्पना विधिरध्यायः ॥

इति मध्यमखण्डः ॥

---

अथ उत्तरखण्डः ।

प्रथमोऽध्यायः

स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा ।
मज्जा च तं पिबेन्मर्त्यः किञ्चिदभ्युदिते रवौ ॥ १ ॥

स्थावरो जङ्गमश्चैव द्वियोनिःस्नेह उच्यते।
तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम्॥ २॥
द्वाभ्यां त्रिभिश्चतुर्भि स्तु यमकस्त्रिवृतो महान्।
पिबेत् त्र्यहं चतुरहं पञ्चाहं षड़हं तथा॥ ३॥
सप्तरात्रात्परं स्नेहः सात्मी भवति सेवितः।
दोषकालाग्निवयसां बलं दृष्ट्वा प्रयोजयेत्॥ ४॥
हीनाञ्च मध्यमां ज्येष्ठां मात्रां स्नेहस्य बुद्धिमान्।
श्रमात्रया तथा काले मिथ्याहारविहारतः॥ ५॥
स्नेहः करोति शोफार्शस्तन्द्रा निद्रा विसंज्ञिता।
देया दीप्ताग्नये मात्रा स्नेहस्य पलसम्मिता।॥ ६॥
मध्यमा च त्रिकर्षा स्याज्जघन्या च द्विकार्षिकी।
अथवा स्नेहमात्राः स्यु स्तिस्रोऽन्याः सर्वसम्मताः॥ ७॥
अहोरात्रेण महतीजीर्य्यत्यङ्गातु मध्यमा।
जघन्या तु दिनार्द्धेन सा विज्ञेया सुखावहा॥८॥
अल्पा स्याद्दीपनी वृष्या स्वल्पदोषे च पूजिता।
मध्यमा स्नेहनी ज्ञेया वृंहणी भ्रमहारिणी॥ ९॥
ज्येष्ठा कुष्ठविषोन्मादग्रहापस्मारनाशिनी।
केवलं पैत्तिके सर्प्पि र्वातिके लवणान्वितम्॥ १०॥
पेयं बहुकफे वापि व्योषक्षार-समन्वितम्।
रूक्षक्षत विषार्त्तानां वातपित्त-विकारिणाम्॥ ११॥
हीनमेधा स्मृतीनाञ्च सर्प्पि पानं प्रशस्यते।
क्रिमिकोष्ठा-निलाविष्टाः प्रवृद्ध कफमेदसः॥१२॥
पिबेयु स्तैलसात्म्याये तैलं दार्ढ्यार्थिन स्तु ये।
व्यायामकर्षिताः शुष्करेतो रक्ता महारुजः॥ १३॥

महाग्नि मारुतप्राणाः वसायोग्या नराः स्मृताः ।
क्रूराशयाः क्लेशसहा वातार्त्ता दीप्तवह्नयः ॥ १४ ॥
मज्जान मापिबेयुस्ते सर्प्पि र्वा सर्वतो हितम् ।
शीतकाले दिवा स्नेहमुष्णकाले पिबेन्निशि ॥ १५ ॥
वातपित्ताधिके रात्री वातश्लेष्माधिके दिवा ।
न स्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षि तर्पणे ॥ १५ ॥
तैलं घृतं वा युञ्जीत दृष्ट्वा दोष बलाबलम् ।
घृते कोष्णं जलं पेयं तैले यूषः प्रशस्यते ॥ १६ ॥
वसा मज्ञो पिबेन्मण्डमनुपानं सुखावहम् ।
स्नेहद्विषः शिशून् वृद्धान् सुकुमारान् कृशानपि ॥ १७ ॥
तृष्णाकुलानुष्णकाले सहभक्तेन पाययेत् ।
सर्पिष्मतीबहुतिला यवागू स्वल्पतण्डुला ॥ १८ ॥
सुखोष्णासेव्यमाना तु सद्यः स्नेहन-कारिणी ।
शर्कराचूर्णसंसृष्टे दोहनस्य घृते तु गाम् ॥१९ ॥
दुग्ध्वा क्षीरं पिबेद्रूक्षः सद्यः स्नेहन मुच्यते ।
मिथ्याचारात् बहुत्वा द्वा यस्य स्नेहो न जीर्य्यते ॥ २० ॥
विष्टभ्य चाप्यजीर्यंत वारिणोष्णे न वामयेत् ।
स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः ॥ २२॥
ततोद्गारो भवेच्छुद्धो भक्तं प्रति रुचि स्तथा ।
स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः ॥ २३ ॥
तदास्योदीरयेत् तृष्णां विषमान्तस्य पाययेत् ।
शीतं जलं वामयेच्च पिपासा तेन शाम्यति ॥ २४ ॥
अजीर्णी वर्जयेत्स्नेह मुदरी तरुणज्वरी ।
दुर्बलोऽरोचकी स्थूलो मूर्च्छार्त्तो मदपीड़ितः ॥ २५ ॥

दत्तवस्ति विरिक्तश्च वान्त स्तृष्णाश्रमान्वितः।
अकाल-प्रसवा नारी दुर्द्दिने च विवर्जयेत्॥ २६ ॥
स्वेद्य संशोध्य मद्यस्त्रीव्यायामासक्त-चित्तकाः।
वृद्धबालक्षशा रूक्षाः क्षीणास्नाः क्षीणरेतसः॥ २७ ॥
वातार्त्ता स्तिमिरार्त्ता ये तेषां स्नेहनमुत्तमम्।
वातानुलोम्यं दीप्तोऽग्निर्वर्च्चः स्निग्धमसंहितम्॥ २८ ॥
मृदुस्निग्धाङ्गताग्लानि स्नेहद्वेषोऽथ लाघवम्।
विमलेन्द्रियता सम्यक् स्निग्धे रूक्षे विपर्य्ययः॥ २९ ॥
भक्तद्वेषो मुखस्रावो गुदेदाहः प्रवाहिका।
तन्द्रातिसारः पाण्डुत्वं भृशं स्निग्धस्य लक्षणम्॥ ३० ॥
रूक्षस्य स्नेहनं स्नेहैरति स्निग्धस्य रूक्षणम्।
श्यामाक-चणकाद्यैश्च तक्रपिण्याक सक्तुभिः॥ ३१ ॥
दीप्ताग्निः शुद्धकोष्टश्च पुष्टधातु र्दृढेन्द्रियः।
निर्जरो बलवर्णाढ्यः स्नेहसेवी भवेन्नरः॥ ३२ ॥
स्नेही व्यायाम संशीतवेगघात प्रजागरान्।
दिवा स्वप्नमभिष्यन्दि रूक्षान्नञ्च विवर्ज्जयेत्॥३३॥

इति स्नेह विधिरध्याय समाप्तः ॥

---

द्वितीयोऽध्यायः।

[अथ स्वेदविधिः] स्वेदश्चतुर्विधः प्रोक्त स्तापोष्मस्वेद संज्ञितौ।
उपनाहो द्रवःस्वेदः सर्वे वातार्त्तिहारिणः॥ १॥

स्वेदौ तापोष्मजौ प्रायः स्नेष्मजौ समुदीरितौ ।
उपनाहस्तु वातघ्नः पित्तसङ्गे द्रवो हितः ॥ २ ॥
महाबले महाव्याधौ शीते स्वेदो महान् स्मृतः ।
दुर्बले दुर्बलः स्वेदो मध्ये मध्यतमो मतः ॥ ३ ॥
वलासे रूक्षणः स्वेदो रूक्षस्निग्धं कफानिले ।
कफमेदो हते वाते कोष्णं गेहं रवेः करात् ॥ ४ ॥
नियुद्धं मार्गगमनं गुरुप्रावरणं ध्रुवम् ।
चिन्ताव्यायामभारांश्च सेवेता-मयमुक्तये ॥ ५ ॥
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम् ।
शोधनीयाश्च ये केचित् पूर्वं स्वेद्याश्च ते मताः ॥ ६ ॥
स्वेद्याः पूर्व्वं त्रयः श्लीहभगन्दर्य्यर्शस स्तथा ।
अश्मर्य्याः चातुरो जन्तुः शमयेत् शस्त्रकर्म्मणा ॥ ७ ॥
पश्चात् स्वेद्या गते शल्ये मूढ़गर्भगदे तथा ।
काले प्रजाताकाले वा पश्चात् स्वेद्या नितम्बिनी ॥ ८ ॥
सर्व्वान् स्वेद्यान्निवाते च जीर्णाहारे च कारयेत् ।
स्वेदाद्धातुस्थिता दोषाः स्नेहक्लिन्नस्य देहिनः ॥ ९ ॥
द्रवत्वं प्राप्य कोष्ठान्तर्गत्वा यान्ति विरेकताम् ।
स्विद्यमान शरीरस्य हृदयं शीतलैः स्पृशेत् ॥ १० ॥
स्नेहाभ्यक्त शरीरस्य शीतैराच्छाद्य चक्षुषी ।
अजीर्णी दुर्बलो मेही क्षतक्षीणः पिपासितः ॥ ११ ॥
अतिसारी रक्तपित्ती पाण्डुरोगी तथोदरी ।
मदार्त्तो गर्भिणी चैव न हि स्वेद्या विजानता ॥ १२ ॥
एतानपि मृदुस्वेदैः स्वेदसाध्यानुपाचरेत् ।
मृदुस्वेदं प्रयुञ्जीत तथा हृन् मुष्कदृष्टिषु ॥ १३ ॥

अतिस्वेदात् सन्धिपीड़ा दाहतृष्णा क्लमभ्रमाः ।
पित्तासृक् पिड़िका कोपस्तत्र शीतै रुपाचरेत् ॥ १४ ॥
तेषु तापाभिधः स्वेदो वालुका वस्त्रपाणिभिः ।
कपालकन्दुकाङ्गारैर्यथायोग्यं प्रयुज्यते ॥ १५ ॥
उष्णस्वेदः प्रयोक्तव्यो लोहपिण्डेष्टकाश्मभिः ।
प्रतप्तै रम्लसिक्तैश्च काये वस्त्राव-वेष्टिते ॥ १६ ॥
अथवा वातनिर्णाशिद्रव्यक्वाथरसादिभिः ।
उष्णै र्घटं पूरयित्वा पार्श्वे च्छिद्रं निधाय च ॥ १७ ॥
विमुद्रास्यं विषाण्डाश्च धातुजां काष्ठजामुत ।
षड़ङ्गुलास्यां गोपुच्छां नाड़ीं युञ्ज्याद्विहस्तिकाम् ॥ १८॥
सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतम् ।
हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ १९ ॥
पुरुषायाममात्रं वा भूमि मुत्कीर्य्य खादिरैः ।
काष्ठै र्दग्ध्वा मथाभ्युक्ष्याक्षीरधान्याम्ल-वारिभिः ॥ २० ॥
वातघ्नपत्रै राच्छाद्य शयानं स्वेदयेन्नरम् ।
एवं माषादिभिः स्विन्नैः शयानं स्वेदमाचरेत् ॥ २१ ॥
तथोपनाहः स्वेदश्च कुर्य्याद्वातहरौषधैः ।
प्रदिह्य देहं वातार्त्तं क्षीर मांस रसान्वितैः ॥ २२ ॥
अम्लपिष्टैः सलवणैः सुखोष्णैः स्नेहसंयुतैः ।
उतग्राम्यानूपमांसै-र्जीवनीयगणेन च ॥ २३ ॥
दधिसौवीरकक्षीरै-र्वीरतर्वादिना तथा।
कुलत्थ माष गोधूमै-रतसी तिलसर्षपैः ॥ २४ ।
शतपुष्पा देवदारु शेफाली स्थूलजीरकैः ।
एरण्डमूलवीजैश्च रास्नामूलक शिग्रुभिः ॥ २५ ॥

निशा कृष्णा कुठेरैश्च लवणैरम्ल संयुतैः ।
प्रसारण्यश्च गन्धाभ्यां बलाभि-र्दशमूलकैः ॥ २६ ॥
गुडूच्या वानरीवीजैः यथालाभं समाहृतैः ।
चुर्णैः स्विन्नैश्च वस्त्रेण बद्धैः संस्वेदयेन्नरम् ॥ २७ ॥
महाशाल्वणसंज्ञोऽयं योगः सर्वा-निलार्त्तिहृत् ।
द्रवस्वेदस्तु वातघ्न द्रव्यक्काथेन पूरितम् ॥ २८ ॥
कटाहं कोष्ठकं वाऽपि सूपविष्टोऽवगाहयेत् ।
नाभेः षड़ङ्गुलं यावन्मग्नः क्काथस्य धारया ॥ २९ ॥
कोष्णया स्कन्धयोः सिक्तः तिष्ठत् स्निग्धतनु र्नरः ।
एवं तैलेन दुग्धेन सर्पिषा स्वेदयेन्नरम् ॥ ३० ॥
एकान्तरो द्व्यन्तरो वा स्नेहयुक्तोऽवगाहने ।
शिरामुखै-र्लोमकूपैर्धमनीभिश्च तर्पयेत् ॥ ३१ ॥
शरीरे बलमाधत्ते युक्तः स्नेहोऽवगाहन ।
जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरा-स्तरोः ॥ ३२ ॥
तथा धातु विवृद्धिर्हि स्नेहसिक्तस्य जायते ।
नातः परतरः कश्चिदुपायो वातनाशनः ॥ ३३ ॥
शीतशुलाद्युपरमे स्तम्भ गौरव निग्रहे ।
दीप्ताग्नौ मार्दवे जाते स्वेदना-द्विरतिर्मता ॥ ३४ ॥
सम्यक् स्विन्नं विमृदितं स्नातमुष्णाम्बुभिः शनैः ।
भोजयेच्चा नभिष्यन्दि व्यायामश्च न कारयेत् ॥ ३५ ॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण ।
विरचिता स्वेदविधिः

## तृतीयोऽध्यायः ।।

[ वमनविधिः] शरत्काले वसन्ते च प्रावृट्काले च देहिनाम् ।
वमनं रेचनं चैव कारयेत् कुशलोभिषक् ।। १ ।।
बलवन्तं कफव्याप्तं हृल्लासादि निपीड़ितम् ।
तथा वमनसात्म्यञ्च धीरचित्तञ्च वामयेत् ।। २ ।।
विषदोषे स्तन्यरोगे मन्देऽग्नौ श्लीपदेऽर्वुदे ।
हृद्रोगे कुष्ठवीसर्पे मेहाजीर्ण-भ्रमेषु च ।। ३ ।।
विदारिका पचीकास श्वास पीनसवृद्धिषु ।
अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ।। ४ ।।
नासा ताल्वोष्ठपाकेषु कर्णस्रावे द्विजिह्वके ।
गलगण्डामतिसारे पित्तश्लेष्मगदे तथा ।। ५ ।।
मेदो गदे रुचौ चैव वमनं कारयेद्भिषक् ।
न वामनीय स्तिमिरी न गुल्मी नोदरी कृशः ।। ६ ।।
नातिवृद्धो गर्भिणी च न स्थूलो न चतातुरः ।
मदार्त्ती वालको रूक्षः क्षुधितश्चातिरूक्षितः ।। ७ ।।
उदावर्त्त्यूर्ध्वरक्ती च दुःच्छर्दिः केवलानिली ।
पाण्डुरोगी कृमिव्याप्तः पठनात् स्वरघातकः ।। ८ ।।
एतेऽप्यजीर्ण व्यथिता वाम्या ये विष-पीड़िताः ।
कफव्याप्ताश्च ये वाम्या मधुक-क्वाथपानतः ।। ९ ।।
सुकुमारं कृशं वालं वृद्धं भीरुं न वामयेत् ।
पीत्वा यवागूमाकण्ठं क्षीरतक्र दधीनि वा ।। १० ।।
असात्म्यैः श्लेष्मलैर्भोज्यै-र्दोषानुत्क्लिश्य देहिनः ।। ११ ।।
स्निग्ध स्विनाय वमनं दत्तं सम्यक् प्रवर्त्तते ।

वमनेषु च सर्वेषु सैन्धवं मधुना हितम् ॥ १२ ॥
वीभत्सं वमनं दृष्या द्विपरीतं विरेचनम् ।
काथ्यद्रव्यस्य कुडवं श्रावयित्वा जलाढ़के ॥ १३
अर्द्धभागावशिष्टश्च वमनेष्व-वचारयेत् ।
क्काथपाने नव प्रस्थात् ज्येष्टा मात्रा प्रकीर्त्तिता ॥ १४ ॥
मध्यमा षड्मिता प्रोक्ता त्रिप्रस्थाच कनीयसी ।
कल्कचूर्णावलेह्यानां त्रिपलं ज्येष्टमात्रया ॥ १५ ॥
मध्यमं द्विपलं विद्यात् कनीयस्तु पलं भवेत् ।
वमने चापि वेगाः स्युरष्टौ पित्तान्त उत्तमाः ॥ १६ ॥
षड्वेगा मध्यमे वेगा श्चत्वारस्त्ववरे मताः ।
वमनेच विरेकेच तथा शोणित मोक्षणे ॥ १७ ॥
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ।
कफं कटुक तीक्ष्णोष्णै पित्तं स्वादुहिमैर्जयेत् ॥ १८ ॥
सुस्वादु लवणाम्लोष्णैः संसृष्टं वायुना कफम् ।
कृष्णां राठफलं सिन्धुं कफे कोष्णजलैः पिवेत् ॥ १९ ॥
पटोल वासानिम्बैश्च पित्ते शीतजलं पिवेत् ।
सश्लेष्म वातपीड़ायां सक्षीरं मदनं पिवेत् ॥ २० ॥
अजीर्णे कोष्णपानीयैः सिन्धुं पीत्वा वमेत् सुधीः ।
वमनं पाययित्वा च जानुमात्रासने स्थितम् ॥२१॥
कण्ठमेरण्डनालेन स्पृशन्तं वामयेद्भिषक् ।
प्रसेको हृद्ग्रहः कोठः कण्डूः दुश्छर्दिते भवेत् ॥ २२ ॥
अतिवान्ते भवेत् तृष्णा हिक्कोद्गारौ विसंज्ञिता ।
जिह्वानिस्सरणं चाक्ष्णो-र्व्यावृति-र्हनु संहतिः ॥ २३ ॥
रक्ताच्छर्द्दिःष्ठीवनश्च कण्ठ पीड़ाच जायते ।

वमनस्यातियोगेतु मृदु कुर्य्याद्विरेचनम् ॥ २४ ॥
वमनान्तः प्रविष्टायां जिह्वायां कवलग्रहः ।
स्निग्धाम्ल-लवणै र्हृद्यै र्घृतक्षीररसै र्हितः ॥ २५ ॥
फलान्यम्लानि खादेयु स्तस्य चान्येऽग्रतो नराः ।
निःसृतान्तु तिलद्राक्षाः कल्कलिप्तां प्रवेशयेत् ॥ २६ ॥
व्यावृत्तेऽक्षिणि घृताभ्यक्ते पीड़येच्च शनः शनैः ।
हनुमोक्षे स्मृतः स्वेदो नस्यञ्च श्लेष्म वातहृत् ॥ २७ ॥
रक्तपित्त विधानेन रक्तच्छर्द्दिमुपाचरेत् ।
धात्रीरसाञ्जनो-शीर लाजा चन्दन वारिभिः ॥ २८ ॥
मन्थं कृत्वा पाययेच्च सघृतं क्षौद्र-शर्क्करम् ।
शाम्यन्त्यनेन तृष्णायाः पीड़ाच्छर्द्दि समुद्भवाः ॥ २९ ॥
हृत्कण्ठशिरसां शुद्धिर्दीप्ताग्नित्वञ्च लाघवम् ।
कफपित्त विनाशश्च सम्यग्वान्तस्य चेष्टितम् ॥ ३० ॥
ततोऽपराह्णे दीप्ताग्निं मुद्गषष्टिकशालिभिः ।
हृद्यैश्च जाङ्गलरसैः कृत्वा यूषञ्च भोजयेत् ॥ ३१ ॥
तन्द्रा निद्रा-स्य-दौर्गन्ध्यं कण्डूश्च ग्रहणी विषम् ।
सुवान्तस्य न पीड़ायै भवन्त्येते कदाचन ॥ ३२ ॥
अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा ।
स्नेहाभ्यङ्गं प्रकोपञ्च दिनैकं वर्ज्जयेत् सुधीः ॥ ३४ ॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण
विरचिते चिकित्सास्थाने
वमनविधिरध्यायः ॥



## चतुर्थोऽध्यायः ।

[विरेचन विधिः]स्निग्धस्विन्नस्य वान्तस्य दद्यात् सम्यग्विरेचनम् ।
अवान्तस्य त्वधः स्रस्तो ग्रहणीं च्छादयेत् कफः ॥ १ ॥
मन्दाग्निं गौरवं कुर्य्या-ज्जनयेद्वा प्रवाहिकाम् ।
अथ वा पाचनै रामं बलासञ्च विपाचयेत् ॥ २ ॥
स्निग्धस्य स्नेहनैः कार्य्यं स्वेदैः स्विन्नस्य रेचनम् ।
शरद्दतौ वसन्ते च देहशुद्धौ विरेचयेत् ॥ ३ ॥
अन्यदा त्वयिके कार्य्यं शोधनं शीलयेद्बुधः ।
पित्ते विरेचनं युञ्ज्याद् दामोद्भूते गदे तथा ॥ ४ ॥
उदरे च तथा ध्माने कोष्ठशुद्धौ विशेषतः ।
दोषाः कदाचित् कुप्यन्ति जिता लङ्घन पाचनैः ॥ ५ ॥
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।
बाल वृद्धावतिस्निग्धाः क्षत क्षीणो भयान्वितः ॥ ६ ॥
श्रान्तस्तृषार्त्तः स्थूलश्च गर्भिणी च नवज्वरी ।
नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ॥ ७ ॥
शल्यार्दितश्च रूक्षश्च न विरेच्या विजानता ।
जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ॥ ८ ॥
अर्शः पाण्डूदरग्रन्थि हृद्रोगा रुचिपीडिताः ।
योनिरोगप्रमेहार्त्ता गुल्म प्लीह व्रणार्दिताः ॥ ९ ॥
विद्रधिच्छर्दि विस्फोट विषूची कुष्ठसंयुताः ।
कर्ण नासा शिरो वक्त्र गुदमेढ्र-मयान्विताः ॥ १० ॥
प्लीह-शोथादि-रोगार्त्ताः क्रमिक्षीणा निलार्दिताः ।
शूलिनो मूत्ररोगार्त्ता विरेकार्हा नरा मताः ॥ ११ ॥

बहुपित्तो मृदुः प्रोक्तो बहुश्लेष्मा च मध्यमः ।
बहुवातः क्रूर-कोष्ठी दुर्विरेच्यः स कथ्यते ॥ १२ ॥
मृद्वी मात्रा मृदौ कोष्ठे मध्यकोष्ठे च मध्यमा ।
क्रूरे तीक्ष्णा मता द्रव्यै-र्मृदुमध्यमतीक्ष्णकैः ॥ १३ ॥
मृदुर्द्राक्षापयश्चाम्बुतैलै रपि विरिच्यते ।
मध्यमा स्त्रिवृता तिक्ता राजवृक्षै-र्विरिच्यते ॥ १४ ॥
क्रूरं स्नुक् पयसा हेम क्षीरी दन्ती फलादिभिः ।
मात्रोत्तमा विरेकस्य त्रिंशद्वेगैः कफान्तका ॥ १५ ॥
वेगैर्विंशतिभि-र्मध्या हीनोक्ता दशवेगकैः ।
द्विपलं श्रेष्ठमाख्यातं मध्यमं च पलं भवेत् ॥ १६ ॥
पलार्द्धञ्च कषायाणां कनीयस्तु विरेचनम् ।
कल्कमोदकचूर्णानां कर्षं मध्वा-ज्य-लेहतः ॥ १७ ॥
कर्षद्वयं पलं वापि वयोरोगा-द्यपेक्षया ।
पित्तोत्तरे त्रिवृच्चूर्णं द्राक्षा-क्वाथादिभिः पिबेत् ॥ १८ ॥
त्रिफलाक्वाथ गोमूत्रैः पिबेद् व्योषं कफार्दितः ।
त्रिवृत् सैन्धव शुण्ठीनां चूर्णमुष्णैः पिबेन्नरः ॥ १९ ॥
वातार्दितो विरेकाय जाङ्गलानां रसेन वा ।
एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन वा ॥ २० ॥
युक्तं पीतं पयोभि-र्वा न चिरेण विरिच्यते ।
त्रिवृता कौटजं वीजं पिप्पली विश्वभेषजम् ॥ २१ ॥
समृद्वीका रसक्षौद्रं वर्षाकाले विरेचनम् ।
त्रिवृद्दुरालभा मुस्त शर्करोदीच्य चन्दनम् ॥ २२ ॥
द्राक्षाम्बुना सयष्ट्याह्वं शीतलञ्च घनात्यये ।
त्रिवृतां चित्रकं पाठामजाजीं सरलां वचाम् ॥ २३ ॥

हेमचीरीव हेमन्ते चूर्ण-मुष्णाम्बुना पिवेत् ।
पिप्पली नागरं सिन्धुं श्यामा त्रिवृतया सह ॥ २४ ॥
लिहेत् चौद्रेण शिशिरे वसन्ते च विरेचनम् ।
त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम् ॥ २५ ॥
अभया मरिचं शुण्ठी विड़ङ्गा मलकानि च ।
पिप्पली पिप्पली-मूलं त्वक्पत्रं मुस्त मेवच ॥ २६ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत् ।
त्रिवृताष्ट-गुणा ज्ञेया षड्गुणा चात्र शर्करा ॥ २७ ॥
मधुना मोदकान् कृत्वा कर्षमात्रान् प्रमाणतः ।
एकैकं भचयेत् प्रातः शीतं वासु पिवेज्जलम् ॥ २८ ॥
ताव द्विरिच्यते जन्तु र्यावत् उष्णं न सेवते ।
पानाहारविहारेषु भवेन्निर्यन्त्रणः सदा ॥ २९ ॥
विषम ज्वरमन्दाग्नि पाण्डुकास भगन्दरान् ।
दुर्नाम कुष्ट यच्माशों गल गण्ड भ्रमोदरान् ॥ ३० ॥
विदाह प्लीह मेहांश्च यच्माणं नयनामयान् ।
वातरोगां स्तथाध्मानं मूत्रकृच्छ्राणि चाश्मरीम् ॥ ३१ ॥
पृष्ठपार्श्वोरु-जघन जङ्घोदर रुजं जयेत् ।
सततं शीलनादेषां पलितानि प्रणाशयेत् ।
अभया मोदका ह्येते रसायनवराः स्मृताः [इति अभया मोदकः]
पीत्वा विरेचनं शीत जलैः संसिच्य चक्षुषी
सुगन्धिं किञ्चिदाघ्राय ताम्बूलं शीलयेद्वरम् ॥ ३२ ॥
निवातस्थो नवेगांश्च धारयेन्न स्वपेत्तथा ।
शीताम्बु न स्पृशेत् क्वापि कोष्णनीरम्पिवेन् मुहुः ॥ ३४ ॥
कर्पूरं सर्वगात्रेषु लेपये-दगुरादिना ।

वायवः स्थूलवेगांश्च धारयेन्न स्वपेत्तथा ॥ ३५ ॥
बलासौषधपित्तानि वायुर्वान्ते यथा व्रजेत् ।
रेकात्तथा मलं पित्तं भेषजञ्च कफो व्रजेत् ॥ ३६ ॥
दुर्विरिक्तस्य नाभेस्तु स्तब्धत्वङ्कुक्षिशूलता ।
पुरीष वातसङ्गश्च कण्डू मण्डल गौरवम् ॥ ३७ ॥
विदाहो ऽरुचिराध्मानं भ्रमश्छर्द्दिश्च जायते ।
तं पुनः पाचनैः स्नेहैः पक्त्वा संस्वेद्य रेचयेत् ॥ ३८ ॥
तेनास्योपद्रवा यान्ति दीप्तोऽग्निर्लघुता भवेत् ।
विरिक्तस्यातियोगेन मूर्च्छा भ्रंशो गुदस्य च ॥ ३९ ॥
शूलं कफातियोगः स्यान्मांस धावन सन्निभम् ।
मेदोनिभं जलाभासं रक्तं वापि विरिच्यते ॥ ४० ॥
तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुला-म्बुभिः ।
मधुमिश्रै स्तथाशीतैः कारये द्वमनं मृदु ॥ ४१ ॥
सहकारत्वचः कल्को दध्ना सौवीरकेण वा ।
पिष्टो नाभिप्रलेपेन हन्त्यतीसारमुल्बणम् ॥ ४२ ॥
अजा-क्षीरं रसं वापि वैष्किरं हारिणं तथा ।
शालिभिः षष्टिकैः स्वल्पं मसूरैर्वापि भोजयेत् ॥ ४३ ॥
शीतैः संग्राहिभिर्द्रव्यैः कुर्यात्संग्रहणं भिषक् ।
लाघवे मनसस्तुष्टा वनुलोमङ्गतेऽनिले ॥ ४४ ॥
सुविरिक्तं नरं ज्ञात्वा पाचनं पाययेन्निशि ।
इन्द्रियाणां बलं बुद्धेः प्रसादं वह्नि-दीपनम् ॥ ४५ ॥
धातुस्थैर्यं वयः स्थैर्यं भवेद्रेचन सेवनात् ।
प्रवातसेवा शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् ॥ ४६ ॥
व्यायामं मैथुनं चैव न सेवेत विरेचितः ।

शालिषष्टिक मुद्गाद्यैर्यवागूर्भोजयेत् कृताम् ॥ ४७ ॥
जङ्गाल विष्किराणां वा रसैः शाल्योदनं हितम् ।
विरेका-द्यौषधे पीते सम्यग् यो न विरिच्यते
पिबेदुष्णाम्बुना तत्र सैन्धवं दोष-शान्तये ॥ ४८ ॥

इति श्रीदामोदर सूनुना शार्ङ्गधरेण विरचिते
चिकित्सास्थाने विरेचन विधिरध्यायः ॥

~~~~~~~~~~

## पञ्चमोऽध्यायः ।

[ वस्तिविधिः ] वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च ततः परम् ।
यः स्नेहैर्दीयते स स्यादनुवासननामकः ॥ १ ॥
कषाय-क्षीरतैलै र्यो निरूहः स निगद्यते ।
वस्तिभिर्दीयते यस्मात् तस्माद्वस्तिरिति स्मृतः ॥ २ ॥
तत्रानुवासनाख्यो हि वस्ति र्यः सोऽत्र कथ्यते ।
पूर्वमेव ततो वस्ति र्निरूहाख्यो भविष्यति ॥ ३ ॥
निरूहादुत्तरश्चैव वस्तिः स्यादुत्तराभिधः ।
अनुवासन भेदश्च मात्रा वस्ति रुदीरितः ॥ ४ ॥
पलद्वयं तस्य मात्रा तस्मादर्द्धापि वा भवेत् ।
अनुवास्य स्तु रूक्षः स्यात् तीक्ष्णाग्निः केवला-निली ॥ ५ ॥
नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूल स्तथोदरी ।
नास्थाप्या नानुवास्याः स्युरजीर्णोन्मादतृट् युताः ॥ ६ ॥
शोक मूर्च्छाऽरुचि भयश्वास कास क्षया-तुराः ।
~~~~~~~~~~

नेत्रं कार्य्यं सुवर्णादि-धातुभिर्वृक्षवेणुभिः ॥ ७ ॥
नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते ।
एकवर्षात् तु षड्वर्षं यावन्मानं षडङ्गुलम् ॥ ८ ॥
ततो द्वादशकं यावन्मानं स्यादष्टसम्मितम् ।
ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता ॥ ९ ॥
मुद्गच्छिद्रं कलायाभं छिद्रङ्कोलास्थि रन्ध्रकम् ।
यथासंख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छ-सन्निभम् ॥ १० ॥
आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते ।
कनिष्ठिका परीणाह मग्रे च गुटिका-मुखम् ॥ ११ ॥
तन्मूले कर्णिके द्वे च कार्य्ये भागाच्च तुर्य्यकात् ।
योजयेत् तत्र वस्तिञ्च बन्धद्वय-विधानतः ॥ १२ ॥
मृगाज शूकरगवां महिषस्यापि वा भवेत् ।
मूत्रकोशस्य वस्तिस्तु तदलाभे च चर्म्मजः ॥ १३ ॥
कषायरक्तः स मृदुर्वस्तिः स्निग्धो दृढ़ो हितः ।
व्रणवस्तेस्तु नेत्रं स्यात् श्लक्ष्णमष्टाङ्गुलोन्मितम् ॥ १४ ॥
मुद्ग च्छिद्रं गृध्र पक्ष नलिका परिणाहि च ।
शरीरोपचयं वर्णं बलमारोग्य मायुषः ॥ १५ ॥
कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः ।
दिवा शीते वसन्ते च स्नेह-वस्तिः प्रदीयते ॥ १६ ॥
ग्रीष्म-वर्षा शरत्काले रात्रौ स्यादनु वासनम् ।
न वापि स्निग्धमशनं भोजयित्वानुवासयेत् ॥ १७ ॥
मदं मूर्च्छां च जनयेद्द्विधा स्नेह प्रयोजितः ।
हीनमात्रा वुभौ वस्ती नाति-कार्य्यकरौ स्मृतौ ॥ १८ ॥
अतिमात्रौ तथा नाह क्लमातीसार-कारकौ ।

उत्तमस्य पलैः षड़्भिर्मध्यमस्य पलैस्त्रिभिः ॥ १९ ॥
पलैकार्द्धेन हीनस्य युक्ता मात्रा-नुवासने ।
शताह्वा सैन्धवाभ्याञ्च देयं स्नेहे च चूर्णकम् ॥ २० ॥
तन्मात्रोत्तम मध्यान्त्या षट्‌चतुर्द्वय माषकैः ।
विरेचनात् सप्तरात्रे गते जातबलाय च ॥ २१ ॥
भुक्तान्नाया-नुवास्याय वस्तिर्देयोनुवासनः ।
अथानुवास्यं स्वभ्यक्त मुष्णाम्बु स्वेदितं शनैः ॥ २२ ॥
भोजयित्वा यथा शास्त्रं कृतं चङ्क्रमणं ततः ।
उत्सृष्टानिलविण्मूत्रं योजयेत् स्नेह-वस्तिना ॥ २३ ॥
सुप्तस्य वामपार्श्वेन वामजङ्घा-प्रसारिणः ।
कुञ्चितापरजङ्घस्य नेत्रं स्निग्धं गुदे न्यसेत् ॥ २४ ॥
बद्ध्वा वस्तिमुखं सूत्रैर्वामहस्तेन धारयेत् ।
पीड़येद्दक्षिणेनैव मध्यवेगेन धीरधीः ॥ २५ ॥
जृम्भा कास चतादींश्च वस्तिकालेन कारयेत् ।
त्रिंशन्मात्रा मितः कालः प्रोक्तो वस्तेस्तु पीड़ने ॥ २६ ॥
ततः प्रणिहितः स्नेहः उत्तानो वाक् शतं भवेत् ।
प्रसारितैः सर्वगात्रै र्यथा वीर्य्यं विसर्पति ॥ २७ ॥
ताड़येत् तलयोरेनं त्रीं स्त्रीन् वारान् शनैः शनैः ।
स्फिजोश्चैवं ततः श्रोणीं शय्यां चैवोत्क्षिपेत् ततः ॥२८॥
जाते विधाने तु ततः कुर्य्यान्निद्रां यथा सुखम् ।
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु ॥ २९ ॥
उपद्रवं विना चैव स सम्यगनुवासितः ।
जीर्णात् तमथ सायाह्ने स्नेहे प्रत्यागते पुनः ॥ ३० ॥
लघ्वन्नं भोजयेत् कामं दीप्ताग्निस्तु नरो यदि ।

अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम् ॥ ३१ ॥
धान्यं शुण्ठी कषायं वा स्नेहव्यापत्ति-नाशनम् ।
अनेन विधिना षड्वा सप्त वाष्टौ नवा पि वा ॥ ३२ ॥
विधेया वस्तयस्तेषामन्तरा तु निरूहणम् ।
अथ वा यस्य तत्कालं स्नेहो निर्य्याति केवलम् ॥ ३३ ॥
तस्यान्योऽल्पतरो देयो न हि स्निग्धस्य तिष्ठति ।
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः ॥ ३४ ॥
तदाङ्गशैथिलाध्मानं शूलं श्वासश्च जायते ।
पक्वाशय गुरुत्वञ्च तत्र दद्यान्निरूहणम् ॥ ३५ ॥
तीक्ष्णं तीक्ष्णौषधैर्युक्ता फलवर्त्तिं हिताश्च वा ।
यथानुलोमनं वायुर्मलं स्नेहश्च जायते ॥ ३६ ॥
यथा विरेचनं दद्यात् तीक्ष्णं नस्यञ्च शस्यते ।
यस्य नोपद्रवं कुर्य्यात् स्नेहवस्ति रति स्मृतः ॥ ३७ ॥
सर्व्वोऽल्पो वा वृतो रौक्ष्यादुपेक्ष्यः स विजानता ।
अनायान्तं त्वहोरात्रे स्नेहं संशोधनै र्हरेत् ॥ ३८ ॥
स्नेहवस्ता वनायाते नान्यः स्नेहो विधीयते ।
गुडूच्चैरण्डपूतीक भार्गी वृषकरोहिषम् ॥ ३९ ॥
शतावरीं सहचरं काकनासां पलोन्मिताम् ।
यव माषातसीकोल कुलत्थान् प्रश्रितोन्मितान् ॥ ४० ॥
चतुर्द्रोणेऽम्भसः पक्वा द्रोण शेषेण तेन च ।
पचेत्तैलाढ़के पेष्यै र्जीवनीयैः पलोन्मितैः ॥ ४१ ॥
अनुवासनमेतद्धि सर्ववात विकार-नुत् ।
षट्सप्ततिव्यापदस्तु जायन्ते वस्तिकर्म्मणः ॥ ४२ ॥
दूषिता समुदायेन तांश्चिकित्स्यास्तु सुश्रुतात् ।

पानाहारविहाराश्च परिहाराश्च कृत्स्नशः ।
स्नेहपानसमा कार्य्या नात्र कार्य्या विचारणा ॥ ४३ ॥

इति श्रीदामोदरसूनुना शार्ङ्गधरेण
विरचिते चिकित्सास्थाने
स्नेह-वस्तिविधिरध्यायः ॥

---

षष्ठोऽध्यायः ।

[निरूहण वस्तिविधिः]निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ १ ॥
निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः ।
स्वस्थान स्थापना दोष-धातूनां स्थापनं मतम् ॥ २ ॥
निरूहस्य प्रमाणञ्च प्रस्थं पादोत्तरं परम् ।
मध्यमं प्रस्थमुद्दिष्टं हीनञ्च कूड़वा स्त्रयः ॥ ३ ॥
अतिस्निग्धोत्‌क्लिष्ट दोषः चतोरस्कः कृशस्तथा ।
आध्मानच्छर्दि हिक्कार्शः कास-श्वासप्रपीड़ितः ॥ ४ ॥
गुदशोफातिसारार्त्तो विषूची कुष्टसंयुतः ।
गर्भिणी मधुमेही च नास्थाप्यश्च जलोदरी ॥ ५ ॥
वातव्याधा वुदावर्त्ते वातासृग्विषमज्वरे ।
मूर्च्छा तृष्णोदरा नाह मूत्रकृच्छ्राश्मरीषु च ॥ ६ ॥
हृद्यासृग्दर मन्दाग्निप्रमेहेषु निरूहणम् ।
शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद्बुधः ॥ ७

उत्सृष्टानिलविण्मूत्रं स्निग्धखिन्नमभोजितम् ।
मध्याह्ने गृहमध्ये च यथायोग्यं निरूहयेत् ॥ ८ ॥
स्नेहवस्ति विधानेन बुधः कुर्य्यान्निरूहणम् ।
जाते निरूहे च ततो भवेदुत्कटकासनः ॥ ९ ॥
तिष्ठेन्मुहूर्त्तमात्रं तु निरूहागमनेच्छया ।
अनायत्तं मुहूर्त्तन्तु निरूहं शोधनैर्हरेत् ॥ १० ॥
निरूहैरेव मतिमान् चार मूत्राम्ल सैन्धवैः ।
यस्य क्रमेण गच्छन्ति विट्पित्तकफवायवः ॥ ११ ॥
लाघवञ्चोपजायेत सुनिरूहं तमादिशेत् ।
यस्य स्याद्वस्तिरल्पाल्पवेगो हीनमलानिलः ॥१२॥
मूत्रार्त्ति जाड्या रुचिमान् दुर्निरूहं त मादिशेत् ।
विरिक्तता मनस्तुष्टिःस्निग्धता व्याधिनिग्रहः ॥ १३ ॥
आस्थापने स्नेहवस्त्योः सम्यग्दाने तु लक्षणम् ।
अनेन विधिना युञ्ज्यान्निरूहं वस्तिदानवित् ॥ १४ ॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथोचितम् ।
स स्नेह एकः पवने पित्ते द्वौ पयसा सह ॥ १५ ॥
कषायकटुमूत्राद्याः कफे चोष्णा स्त्रयो हिताः ।
पित्त-श्लेष्मानिलाविष्टं क्षीर-यूष रसैः क्रमात् ॥ १६ ॥
निरूहं भोजयित्वा च ततस्त मनुवासयेत् ।
सुकुमारस्य वृद्धस्य बालस्य च मृदुर्हितः ॥ १७ ॥
वस्तिस्तीक्ष्णः प्रयुक्तस्तु तेषां हन्याद्बलायुषी ।
दद्यादुत्क्लेशनं पूर्वं मध्ये दोष-हरं ततः ॥ १८ ॥
पश्चात् संशमनीयञ्च दद्याद्वस्तिं विचक्षणः ।
एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा ॥ १९॥

चपूषा फलकल्काद्य वस्तिरुत्क्लेशनः स्मृतः [उत्क्लेशन वस्तिः]
शताह्वा मधुकं विल्वं कौटजं फलमेव च ॥ २० ॥
स काञ्जिकः स गोमूत्रो वस्तिर्दोषहरः स्मृतः [दोषहर वस्तिः]
प्रियङ्गुर्मधुकं मुस्ता तथैव च रसाञ्जनम् ॥ २१ ॥
स चीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः [शमन वस्तिः[
शोधनद्रव्यनिःक्वाथ्यै तत्कल्कैः स्नेहसैन्धवैः ॥ २२ ॥
युक्त्या खजेन मथिता वस्तयः शोधनाः स्मृताः [शोधमवस्तयः]
त्रिफलक्वाथगोमूत्र चौद्रचारसमायुताः ॥ २३ ॥
ऊषकादि प्रतीवाया वस्तयो लेषणा स्मृताः [ लेषणवस्तयः ]
वृंहण द्रव्य-निः क्वाथकल्कैर्मधुरकैर्युताः ॥ २४ ॥
सर्पिर्मांसरसोपेता वस्तयोर्वृंहणाः स्मृताः [वृंहणवस्तयः]
वदर्यैरावतीशेल-शाल्मली-धान्यनागरः ॥ २५ ॥
चीरसिद्धाः चीरयुक्ता नाम्ना पिच्छलसंज्ञितः ।
अजोरभ्रैण रुधिरैर्युक्ता देया विचक्षणैः ॥ २६ ॥
मात्रापिच्छिलवस्तीनां पलैर्द्वादशभि र्मता [पिच्छिलवस्तयः]
दत्वादौ सैन्धवस्याचं मधुनः प्रसृति-द्वयम् ॥ २७ ॥
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतित्रयम् ।
एकीभूते ततः स्नेहे कल्कस्य प्रसृतिं चिपेत् ॥२८॥
संमूर्च्छिते कषायन्तु चतुः प्रसृति-संमितम् ।
चिप्त्वा विमथ्य दद्याच निरूहं कुशलो भिषक् ॥ २९ ॥
वाते चतुः पलं चौद्रं दद्यात् स्नेहस्य षट्पलम् ।
पित्ते चतुः पलं चौद्रं स्नेहं दद्यात्पलत्रयम् ॥ ३० ॥
कफे च षट्पलं चौद्रं चिपेत् स्नेहं चतुःपलं [निरूह मात्रा विधिः]
एरण्डक्वाथ तुल्यांशं मधुतैलं पलाष्टकम् ॥ ३१ ॥

शतपुष्पापलार्द्धेन सैन्धवार्द्धेन संयुतम् ।
मधुतैलकसंज्ञोऽयं वस्तिः दार्व्वीविलोडितः ॥३२॥
मेदो गुल्मक्रमि प्लीहमलोदावर्त्त नाशनः ।
बलवर्ण करश्चैव वृष्योद्दीपन वृंहणः ॥३३॥ [मधुतैलकवस्तिः]
क्षौद्राज्य क्षीरतैलानां प्रसृतं प्रसृतं भवेत् ।
त्व-पूषासैन्धवाच्चांशो वस्तिःस्याद्दीपनः परः ॥३४॥[यापनवस्तिः]
एरण्डमूलनिःक्वाथं मधुतैलं ससैन्धवम् ।
एष युक्त रथो वस्तिः सवचापिप्पलीफलः ॥३५॥[युक्तरथवस्तिः]
पञ्चमूलस्य निःक्वाथं तैलं मागधिका मधु ।
स सैन्धव समायुक्तः सिद्धवस्तिरिति स्मृतः ॥ ३६ [सिद्धवस्तिः]
स्नानमुष्णोदकैः कुर्याद्दिवा स्वप्नमजीर्णताम् ।
वर्जयेदपरं सर्वमाचरेत् स्नेहवस्तिवत् ।
निरूहादुत्तरोयस्मात् तस्मादुत्तर संज्ञितः ॥ ७ ॥

इति श्रीदामोदर सूनुना शार्ङ्गधरेण
विरचिते चिकित्सास्थाने
निरूहवस्तिविधिरध्यायः ॥

---

सप्तमोऽध्यायः ।

[अथ उत्तरवस्तिविधिः] अतःपरं प्रवक्ष्यामि वस्तिमुत्तर संज्ञितम्
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम् ॥ १॥
मालतीपुष्प वृन्ताभच्छिद्रं सर्षपनिर्गमम् ।

पञ्चविंशतिवर्षाणामधोमात्रा द्विकार्षिकी ॥ २ ॥
तदूर्द्ध पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ।
अथास्थापनशुद्धस्य तृप्तस्य स्नानभोजनैः ॥ ३ ॥
स्थितस्य जानुमात्रे च पीठेऽन्वेष्य शलाकया ।
स्निग्धया मेढ्र मार्गञ्च ततो नेत्रं नियोजयेत् ॥ ४ ॥
शनैःशनै घृताभ्यक्तं मेढ्रन्धेऽङ्गुलानि षट् ।
ततोऽवपीड़येद् वस्तिं शनैर्नैत्रञ्च निर्हरेत् ॥ ५ ॥
ततः प्रत्यागते स्नेहे स्नेहवस्ति-क्रमो हितः ।
स्त्रीणां कनिष्ठिका स्थूलं नेत्रं कुर्य्याद्दशाङ्गुलम् ॥ ६ ॥
मुद्गप्रवेशं योज्यं च योन्यन्त श्चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे च सूक्ष्मं नेत्रं विचक्षणैः ॥ ७ ॥
मूत्रकृच्छ्र विकारेषु बालानान्त्वेक मङ्गुलम् ।
शनै र्निष्क्रम्य माधेयं सूक्ष्मं नेत्रं विचक्षणैः ॥ ८ ॥
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी ।
मूत्रमार्गे पलोन्माना बालानाञ्च द्विकार्षिकी ॥ ९ ॥
उत्तानाय स्त्रियै दद्यादूर्द्धजान्वै विचक्षणः ।
अप्रत्यागच्छति भिषग्वस्तावुत्तर संज्ञिते ॥ १० ॥
भूयो वस्तिं विदध्याच्च संयुक्तैः शोधनैर्गुणैः ।
फलवस्तिं निदध्याद्वा योनिमार्गे दृढ़ं भिषक् ॥ ११ ॥
सूत्रैर्विनिर्मितां स्निग्धां शोधनद्रव्य-संयुताम् ।
दह्यमाने तथा वस्तौ दद्याद्वस्तिं विशारदः ॥ १२ ॥
क्षीरवृक्ष कषायेण पयसा शीतलेन वा ।
वस्तिः शुक्ररजः पुंसां स्त्रीणामार्तवजां रुजम् ॥ १३ ॥
हन्यादुत्तर वस्तिस्तु नो चितो मेहिनां क्वचित् ।

सम्यग्द तस्य लिङ्गानि व्यापदः क्रम एव च ।
वस्ते रुत्तरसंज्ञस्य समानं स्नेहवस्तिना ॥ १४॥

[फलवर्त्ति विधिः]घृताव्यक्ते गुदे चेप्या श्लक्ष्णा साङ्गुष्ठसन्निभा ।
मलप्रवर्त्तिनीवर्त्तिः फलवर्त्तिश्च सा स्मृता ॥ १५ ॥

अष्टमोऽध्यायः

[अथ नस्यविधिः] नस्यं तत् कथ्यते धीरै र्नासाग्राह्यं यदौषधम् ।
नावनं नस्यकर्मेति तस्य नाम द्वयं मतम् ॥ १ ॥
तस्य भेदो द्विधा प्रोक्तो रेचनं स्नेहनं तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं वृंहणं मतम् ॥ २ ॥
कफपित्तानिलध्वंसे पूर्व्वं मध्यापराह्णके ।
दिनेतु गृह्णीतं नस्यं रात्रौ चप्युत्कटे गदे ।
नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चापतर्पितः ॥ ३ ॥
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ।
अजीर्णी दत्तवस्तिश्च पीत स्नेहोदकासवः ॥ ४ ॥
क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ ।
वेगावरोधी स्नातश्च स्नातुकामश्च वर्ज्जयेत् ॥ ५
अष्टवर्षस्य बालस्य नस्यकर्म समाचरेत् ।
अशीतिवर्षा दूर्द्धञ्च नावनं नैव दीयते ॥ ६ ॥
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ।
तीक्ष्णभेषज-सिद्धैर्वा स्नेहैः क्वाथैः रसैस्तथा ॥ ७ ॥
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च विन्दवः ।
प्रत्येकं रेचनं योज्यं मुख्यमध्याल्य-मात्रया ॥ ८ ॥
नस्य-कर्म्मणि दातव्यं माषैकं तीक्ष्णमौषधम् ।
हिङ्गु स्याद्‌ यवमात्रन्तु माषैकं सैन्धवं मतम् ॥ ९ ॥

क्षीरञ्चैवाष्ट माषं स्यात् पानीयञ्च त्रिकार्षिकम् ।
कार्षिकं मधुरं द्रव्यं नस्य कर्मणि योजयेत् ॥ १० ॥
अवपीड़ा प्रधमनं द्वौ भेदा वपरौ स्मृतौ ।
शिरोविरेचनस्यात्र तौ तु देयौ यथायथम् ॥ ११ ॥
कल्की कृताद्दौषधाद् यः पीड़ितो निःसृतो रसः ।
सोऽवपीड़ः समुद्दिष्टः तीक्ष्णद्रव्यसमुद्भवः ॥ १२ ॥
षड़ङ्गुलाद्द्विवक्त्रा या नाड़ी चूर्णं तया धमेत् ।
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हि तत् ॥ १३ ॥
ऊर्ध्वजत्रुगते रोगे कफजे स्वरसंचये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥ १४ ॥
शोफापस्मारकौष्ठेषु नस्यं वैरेचनं हितम् ॥ १५ ॥
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ।
गलरोगे सन्निपाते निद्रायां सविषे ज्वरे ॥ १६ ॥
मनोविकारे कृमिषु युज्यते चावपीड़नम् ।
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ॥ १७ ॥
चूर्णं प्रधमनं धीरैस्तद्धि तीक्ष्णतरं यतः । [नस्यं वैरेचनं यथा]
नस्यं स्याद्गुड़ शुण्ठीभ्यां पिप्पल्या सैन्धवेन वा ॥ १८ ॥
जलपिष्टेन तेनाक्षिकर्ण नासाशिरोगदाः ।
मन्याहनुगलोद्भूताः नश्यन्ति भुजपृष्ठजाः ॥ १९ ॥
मधूकसार-कृष्णाभ्यां वचामरिच-सैन्धवैः ।
नस्यं कोष्णजलैः पिष्टन्दद्यात्संज्ञाप्रबोधनम् ॥ २० ॥
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके ।
सैन्धवं श्वेतमरिचं सर्षपाकुष्टमेव च ॥ २१ ॥
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ।

रोहीतमत्स्यपित्तेन भावितं मरिचं वचा ॥ २२ ॥
मरिचं पिप्पली शुण्ठी कङ्कोलं लसुनं पुरम् ।
कट्फलं चेति तच्चूर्णन्द्रेयं प्रधमनं बुधैः ॥ २३ ॥
अथ वृंहणनस्यस्य कल्पना कथ्यतेऽधुना ।—
मर्शश्च प्रतिमर्शश्च द्वौ भेदौ स्नेहनौ मतौ ॥ २४ ॥
मर्शस्य तर्प्पिणो मात्रा मुख्या शाणैः स्मृताष्टभिः ।
मध्यमा च चतुः शाणैर्हीना शाणमिता मता ॥ २५ ॥
एकैकस्मिंस्तु मात्रेयं देया नासापुटे बुधैः
मर्शस्य द्विर्विरेकं वा वीक्ष्य दोषबलाबलम् ॥ २६ ॥
एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः ।
त्र्यहं पञ्चाहमथ वा सप्ताहं वा सुयन्त्रितः ॥ २७ ॥
मर्शे शिरोविरेके च व्यापदो विविधाः स्मृताः ।
दोषोत्क्लेशक्षयाच्चैव विज्ञेया स्ता यथाक्रमम् ॥ २८ ॥
दोषोत्क्लेश निमित्तासु युञ्ज्याद्वमन शोधनम् ।
अथ क्षय निमित्तासु यथास्वं वृंहणं हितम् ॥ २९ ॥
शिरोनासाक्षिरोगेषु सूर्यावर्त्तार्द्धभेदके ।
दन्तरोगे बले हीने मन्याबाहुंसजे गदे ॥ ३० ॥
मुखशोषे कर्णनादे वातपित्तगदे तथा ।
अकालपलिते चैव केशश्मश्रु प्रपातने ॥ ३१ ॥
युज्यते वृंहणं नस्यं स्नेहैर्वा मधुरद्रवैः ।
[वृंहणं नस्यं यथा]सशर्करं पयः पिष्टं भृष्टमाज्येन कुङ्कुमम्॥३२
नस्य प्रयोगतो हन्याद्वातरक्तभवा रुजः ।
भ्रूशङ्खाक्षिशिरः कर्ण-सूर्यावर्त्तार्द्ध भेदकाः ॥ ३३ ॥
नस्यं स्यादणुतैलेन तथा नारायणेन वा ।

माषादिना वा सर्पिर्भिस्तत्तद्भेषज-साधितैः ॥ ३४ ॥
तैलं कफे स्याद्वाते च केवले पवने वसा ।
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्जानमेव च ॥ ३५ ॥
माषात्म गुप्ता रास्नाभिर्वलारुवक-रोहिषैः ।
क्वतोऽम्बुगन्धया क्वाथोहिङ्गु सैन्धव संयुतः ॥ ३६ ॥
कोष्णो नस्य-प्रयोगेण पक्षाघातं सकम्पनम् ।
जयेदर्द्दितवातं च मन्यास्तम्भाप बाहुकौ ॥ ३७ ॥
प्रतिमर्शस्य मात्रा तु द्वि द्वि विन्दु मिता मता ।
प्रत्येकशो नासिकयोः स्नेहेनेति विनिश्चितम् ॥ ३८ ॥
स्नेहे ग्रन्थिद्वयं यावन्निमग्नं चोद्धृतं ततः ।
तर्जनीयं श्रवेद्विन्दु सा मात्रा विन्दु संज्ञिता ॥ ३९ ॥
एवम्बिधैर्विन्दुसंख्यैरष्टाभिः शाण उच्यते ।
स देयोमर्शे नस्येषु प्रतिमर्शो द्विविन्दुकः
समयाप्रतिमर्शस्य बुधैः प्रोक्ताश्चतुर्द्दश ॥ ४० ॥
प्रभाते दन्त काष्ठान्ते गृहान्निर्गमने तथा ।
व्यायामाध्व व्यवायान्ते विरमूत्रान्तेऽञ्जने क्वते ।
कवलान्ते भोजनान्ते दिवासुप्तोत्थिते तथा ॥ ४१ ॥
वमनान्ते तथा सायं प्रतिमर्शः प्रयुज्यते ।
ईषदुच्छिन्दनात् स्नेहो यदा वक्त्रं प्रपद्यते ॥ ४२ ॥
नस्ये निषिक्तान्त विद्यात्प्रतिमर्शप्रमाणतः ।
उच्छिद्य न पिवेच्चैतन्निष्ठीवेन्मु खमागतम् ॥ ४३ ॥
क्षीणे तृष्णास्यशोषार्त्ते बाले वृद्धे च युज्यते ।
प्रतिमर्शेण शाम्यन्ति रोगाश्चैवोर्द्धजत्रुजाः ॥ ४४ ॥
वलीपलित नाशश्च वलमिन्द्रियजम्भवेत् ।

विभीत निम्बगम्भारीशिवाशैलय काकिनी ॥ ४५ ॥
एकैकं तैलनस्येन पलितं नश्यति ध्रुवम् ।
अथ नस्यविधिं वक्ष्ये नस्यग्रहणहेतवे ॥ ४६ ॥
देशे वातरजायुक्ते कृत दन्त-निघर्षणम् ।
विशुद्धन्धूमपानेन स्विन्नभालगलं तथा ॥ ४७ ॥
उत्तानशायिनं किञ्चित्प्रलम्बशिरसं नरम् ।
आस्तीर्य्यं हस्तपादञ्च वस्त्राच्छादितलोचनम् ॥ ४८ ॥
समुन्नासित नासाग्रं वैद्यो नस्येन योजयेत् ।
कोष्णमाच्छिन्नधारञ्च हेमताराादि शुक्तिभिः ॥ ४९ ॥
शुक्त्या वा पत्रयुक्त्या वा स्रोतैर्वा नस्य माचरेत् ।
नस्ये त्वासिच्यमानेषु शिरो नैव प्रकम्पयेत् ॥ ५० ॥
न कुप्येच्च प्रभाषेत नोच्छिक्केन्न हसेत्तथा ।
एतै र्हि विहितः स्नेहो नैवान्तः संप्रपद्यते ॥ ५१ ॥
ततः कास प्रतिश्यायशिरोऽक्षिगद सम्भवः ।
शृङ्गाटकमभिप्लाव्य स्थापयेन्न गिलेद् द्रवम् ॥ ५२ ॥
पञ्च सप्तदशैव स्युर्मात्रा नस्यस्य धारणे ।
उपविश्याथ निष्टीवेन्नासावक्त्रागतं द्रवम् ।
वामदक्षिण पार्श्वाभ्यां निष्टीवेत्सं मुखं नहि ॥ ५३ ॥
नीते नस्ये मनस्तापं रजःक्रोधञ्च संत्यजेत् ।
शयीत निद्राम्यक्त्वा च प्रोताम्स्रो वाक्शतं नरः ॥ ५४ ॥
तथा वैरेचनस्यान्ते धूमो वा कवलो हितः ।
नस्ये त्रीण्युपदिष्टानि लक्षणानि प्रयोगतः ॥ ५५ ॥
शुद्धिहीनानि योगानि विशेषाच्छास्त्र चिन्तकैः ।
लाघवं मनसः शुद्धिः स्रोतसां व्याधिसंक्षयः ॥ ५६ ॥

चित्तेन्द्रियप्रसादश्च शिरसः शुद्धिलक्षणम् ।
कण्डूपदेहौ गुरुता स्रोतसाङ्कफसंस्रवः ॥ ५७ ॥
मूर्द्ध्निहीनं विशुद्धे तु लक्षणं परिकीर्त्तितम् ।
मस्तुलङ्गागमोवातवृद्धिरिन्द्रिय-विभ्रमः ॥ ५८ ॥
शून्यता शिरसश्चापि मूर्द्ध्निगाढ़े विरेचिते ।
हीनातिशुद्धे शिरसि कफवातघ्नमाचरेत् ॥ ५९ ॥
सम्यग्विशुद्धे शिरसि सर्पिर्नस्ये निषेचयेत् ।
कफः प्रसेकः शिरसो गुरुतेन्द्रिय विभ्रमः ॥ ६० ॥
लक्षणन्त्वतिस्निग्धे तत्र रूक्षं प्रदापयेत् ।
भोजयेच्चानभिष्यन्दि नस्याचारिक मादिशेत् ॥६१॥
वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
एतानि पञ्च कर्माणि कथितानि मुनिश्वरैः ॥ ६२ ॥

## नवमोऽध्यायः

[अथ धूम पानविधिः] धूमस्तु षड्विधः प्रोक्तः शमनो वृंहणस्तथा
रेचनः कासहा चैव वामनो व्रण धूपनः ॥ १ ॥
शमनस्य तु पर्यायोमध्यः प्रायोगिक स्तथा ।
वृंहणस्यापि पर्यायौ स्नेहनो मृदुरेवच ॥ २ ॥
रेचनस्यापि पर्यायौ शोधन स्तीक्ष्ण एव च ।
अधूमार्हाश्च खल्वेते श्रान्तो भीतश्च दुःखितः ॥ ३ ॥
दत्तवस्तिर्विरक्तश्च रात्रौ जागरितस्तथा ।
पिपासितश्च दाहार्त स्तालुशोषी तथोदरी ॥ ४ ॥
शिरोऽभितापी तिमिरी च्छर्द्याध्मानप्रपीड़ितः ।
क्षतोरस्कः प्रमेहार्त्तः पाण्डुरोगी च गर्भिणी ॥ ५ ॥
रूक्षः क्षीणाभ्यवहृत-क्षीर क्षौद्रघृतासवः ।

भुक्तान्न दधिमत्स्यश्च बालो वृद्धः कृशस्तथा ॥ ६ ॥
अकाले चाति-पीतश्च धूमः कुर्यादुपद्रवान् ।
तत्रेष्टं सर्पिषः पानं नावनाञ्जनतर्प्पणम् ॥ ७ ॥
सर्प्पिरिक्षु रसं द्राक्षां पयो वा शर्कराम्बु वा ।
मधुराम्लौ रसौ वापि वमनाय प्रदापयेत् ॥ ८ ॥
धूमो द्वादशकाद्वर्षाद् गृह्यते शीतिकान्नच ।
कास श्वास प्रतिश्यायान् मन्याहनु शिरो रुजः ॥ ९ ॥
वात श्लेष्म विकारांश्च हन्याद्धूमः सुयोजितः ।
धूम प्रयोगात् पुरुषः प्रसन्नेन्द्रिय-वाङ्मनाः ॥ १० ॥
दृढ़केशद्विजश्मश्रु सुगन्धि वदनो भवेत् ।
धूम नाड़ी भवेत्तत्र त्रिखण्डा च त्रिपर्विका ॥ ११ ॥
कनिष्ठिका परीणाहा राज-माषा-गमान्तरा ।
धूम नाड़ी भवेत् दीर्घा शमने रोगिणोऽङ्गुलैः ॥ १२ ॥
चत्वारिंशन्मितैस्तद्वद्द्वात्रिंशद्भिर्क्दी मता ।
तीक्ष्णे चतुर्विंशतिभिः कासघ्नी षोड़शोन्मितैः ॥ १३ ॥
दशाङ्गुले वामनीया तथा स्याद् व्रण नाड़िका ।
कलाय मण्डलस्थूला कुलत्था गमरन्ध्रका ।
अथैषिकां प्रक्षिपेच्च सुश्लक्ष्णां द्वादशाङ्गुलाम् १४ ॥
धूम द्रव्यस्य कल्केन लेपश्चाष्टाङ्गुलः स्मृतः ।
कल्कं कर्षमितं लिप्ता च्छायाशुष्कञ्च कारयेत् ।
इषिकामपनीयाथ स्नेहाक्तां वर्तिमादरात् ॥ १५ ॥
अङ्गारैर्द्दीपितां कृत्वा धृत्वा नेत्रस्य रन्ध्रके ।
वदनेन पिवेद्धूमं वदनेनैव सन्त्यजेत् ॥ १६ ॥
नासिकाभ्यां ततः पीत्वा मुखेनैव वमेत्सुधीः ।

शराव-संपुटे च्छिन्ना कल्कमङ्गारदीपितम् ॥ १७
छिद्रे नेत्रं निवेश्याथ व्रणं तेनैव धूपयेत् ।
एलादि कल्क शमन-स्निग्धं सर्जरसं मृदौ ॥ १८ ॥
रेचने तीक्ष्ण कल्कश्च कासघ्नं त्रुद्रिकोषणम् ।
वमने स्नायुवर्माद्यन्द्याद्धूमस्य पानकम् ॥ १९ ॥
व्रणे निम्ववचाद्यश्च धूपनं सम्प्रशस्यते ।
अन्येऽपि धूम्रपानेषु कर्तव्या रोग-शान्तये ॥ २० ॥
[सयथा] ॥ मयूर पिच्छं निम्बस्य पत्राणि बृहतीफलम् ।
मरिचं हिङ्गु मांसी च वीजं कार्पाससम्भवम् ॥ २१ ॥
च्छागरोमाहि निर्मोकं विष्ठा वैडालिकी तथा ।
गजदन्तश्च तच्चूर्णं किञ्चिद्घृत-विमिश्रितम् ॥ २२ ॥
गेहेषु धूपनं दत्तं सर्वान् बालग्रहान् जयेत् ।
पिशाचान् राक्षसान् जित्वा सर्वज्वरहरो भवेत् ॥ २३ ॥
[अपराजितो धूपः] परिहारस्तु धूमेषु कार्यो रेचन-नस्यवत्।
नेत्राणि धातुजान्याहु र्नालवंशादिजान्यपि॥ २४ ॥

दशमोऽध्यायः ।

अथ गण्डूष कवलप्रति सारण विधिः ।

चतुर्विधः स्याद्गण्डूषः स्नैहिक शमनस्तथा ॥ १ ॥
शोधनो रोपणश्चैव कवलस्यापि तद्विधः ।
स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः ॥ २ ॥
पित्ते कट्वम्ल लवणैरुष्णैः संशोधनः कफे ।
कषाय तिक्तमधुरैः कटूष्णै रोपणो व्रणे ॥ ३ ॥
चतुः प्रकारे गण्डूषः कवलस्यापि कीर्त्तितः ।
असञ्चारी मुखे पूर्णे गण्डूषः कवलश्चरः ॥ ४ ॥

तत्र द्रवेण गण्डूषः कल्केन कवलः स्मृतः ।
दद्यात् द्रवेषु संचूर्णं गण्डूषे कोलमात्रकम् ॥ ५ ॥
कर्षप्रमाणः कल्कस्य कवले दीयते बुधैः ।
धार्यन्ते पञ्चमाद्वर्षात् गण्डूष-कवलादयः ॥ ६ ॥
गण्डूषान् सुस्थितः कुर्यात् स्विन्न भालगलादिकः ।
मनुष्यं स्त्रीं तथा पञ्च सप्त वा दोषनाशनात् ॥ ७ ॥
कफ पूर्णास्यता यावत् च्छेदो दोषस्य वा भवेत् ।
नेत्रघ्राण श्रुतिर्यावत्तावद्गण्डूषधारणम् ॥ ८ ॥
[तद्यथा ॥ तिल कल्कोदकं क्षीरं स्नेहो वा स्नैहिकं हितम्
तिला नीलोत्पलं सर्पिश्शर्करा क्षीर मेव च ॥ ९ ॥
सक्षौद्रोहनु वक्त्रस्थो गण्डूषोदह्नुनाशनः ।
वैशद्यं जनयत्यास्ये सन्दधाति मुख व्रणान् ॥ १० ॥
दाहतृष्णाप्रशमनं मधुगण्डूष धारणम् ।
विषे क्षाराग्नि दग्धे च सर्पिर्धार्य्यं पयोऽथ वा ॥ ११ ॥
तिलसैन्धवगण्डूषो दन्तचाले प्रशस्यते ।
शोषं मुखस्य वैरस्यं गण्डूषः काञ्जिको जयेत् ॥ १२ ॥
सिन्धु त्रिकटुराजीभि रार्द्रकेन कफेह्नितः ।
त्रिफलि मधुगण्डूषः कफास्रक् पित्तनाशनः ॥ १३ ॥
दार्व्वी गुडूची त्रिफल-द्राक्षाजात्याश्च पल्लवाः ।
यवासश्चेति तत्क्वाथः षष्ठांशः क्षौद्रसंयुतः ॥ १४ ॥
शीतो मुखे धृतो हन्यात् मुखपाकं त्रिदोषजम् ।
यस्यौषधस्य गण्डूषस्तस्यैव प्रतिसारणम् ॥ १५ ॥
कवलस्यापितस्यैव ज्ञेयोऽत्र कुशलैर्नरैः ।
[कवलो यथा] केसरं मातलुङ्गस्य सैन्धवोषणसंयुतम् ॥ १६ ॥

हन्यात् कवलतो जाद्य मरुचिं कफवातजाम् ।
कल्कोऽवलेहश्चूर्णञ्च त्रिविधं प्रतिसारणम् ॥ १७ ॥
अङ्गुल्यग्र प्रणीतञ्च यथास्वं मुखरोगिणाम् ।
[प्रतिसारं चूर्णं यथा]कुष्ठन्दार्वीसमङ्गाच पाठा तिक्ताच पीतिका
तेजनी मुस्तलोध्रञ्च चूर्णं स्यात् प्रतिसारणम् ॥ १८ ॥
रक्तस्रुतं दन्तपीड़ां शोथन्दाहञ्च नाशयेत् ।
हीनयोगात् कफोत्क्लेशो रसा ज्ञानारुची तथा ॥ १९ ॥
अतियोगात् मुखेपाकः शोषः तृष्णाक्लमो भवेत् ।
व्याधेरपचयस्तुष्टिः वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च गण्डूषे शुद्धि लक्षणम् ॥ २० ॥

एकादशोऽध्यायः ।

अथा लेपमुद्दं तैलकर्ण पूरणविधिः ।
आलेपकस्य नामानि लिप्तिर्लेपश्च लेपनम् ॥ १ ॥
दोषघ्नो विषहा वर्ण्यो मुखालेप स्त्रिधा मतः ।
त्रिप्रमाणस्तु भागः त्रिभागोर्द्धाङ्गुलीन्नतः ॥ २ ॥
आर्द्रो व्याधिहरः स स्या च्छुष्कोदूषयति च्छविम् ॥
[दोषघ्नोलेपो यथा] ॥ पुनर्नवा दारु शुण्ठी सिद्धार्थं शिग्रु मेवच
पिष्ट्वा चै वारनालेन प्रलेपः सर्वशोथजित् ॥ ३ ॥
विभीतफलमोजस्तु लेपो दाहार्तिनाशनः ।
शिरीषं मधु यष्टी च तगरं रक्तचन्दनम् ॥ ४ ॥
एलामांसी निशायुग्मं कुष्टं बालक मेवच ।
इति सञ्चूर्ण्य लेपोऽयं पञ्चमांश घृताप्लुतः ॥ ५ ॥
जलेन क्रियते सुक्ष्मे दंशाङ्ग इति संज्ञितः ।
विसर्पांन्विषविस्फोटान् शोथान् दुष्ट व्रणान् जयेत् ॥ ६ ॥

कुष्ठं कालीयकं लोध्र मेभिर्लेपं प्रयोजयेत् ॥ १८ ॥
तारुण्यपिड़का व्यङ्गनीलिकादि विनाशनम् ।
पुराणमथपिण्याकं पुरीषं कुक्कुटस्य च ॥ १९ ॥
मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरुषिकाम् ।
खदिरारिष्टजम्बूनां त्वग्भिर्वा मूत्रसंयुतैः ॥ २० ॥
कुटजत्वक् सैन्धवश्च लेपो हन्यादरुषिकाम् ।
प्रियालुवीज मधुक कुष्टमाषैः ससैन्धवैः ॥ २१ ॥
कार्य्योदारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ।
दुग्धेन खाखसं वीजं प्रलेपाद्दारुणं जयेत् ॥ २२॥
आम्रवीजस्य चूर्णं तु शिवाचूर्णं समं द्वयम् ।
दुग्धपिष्टः प्रलेपोऽयं दारुणं हन्ति दारुणम् ॥ २३ ॥
रस स्तिक्तपटोलस्य पत्राणां तद्विलेपनात् ।
इन्द्रलुप्तं शमं याति त्रिभिरेव दिनै र्ध्रुवम् ॥ २४ ॥
इन्द्र लुप्तापहो लेपो मधुना वृहतीरसः ।
गुञ्जामूलं फलं वापि भल्लातकरसोऽपि वा ॥ २५ ॥
गोक्षुर स्तिलपुष्पाणि तुल्ये च मधुसर्पिषी ।
शिरः प्रलेपनं तेन केशसम्वर्द्धनं परम् ॥ २६ ॥
हस्तिदन्तमसीं कृत्वा च्छागीदुग्धं रसाञ्जनम् ।
निम्बपत्रस्य मूलं वा कोष्ण सम्पुटके धृतम् ॥ २७॥
रोमाणि तेन जायन्ते लेपात् पाणितलेष्वपि ।
यष्टीन्दीवरमृद्वीकातैलाज्यक्षीरलेपनैः ॥ २८ ॥
इन्द्र लुप्तं शमं याति केशाः स्युः सघना दृढ़ाः ।
चतुः पदानां त्वग्रोमनख शृङ्गास्थि भस्मभिः ॥ २९ ॥
तैलेन सह लेपोऽयं लोम सञ्जननः परः ।

सिद्धार्थको वचा हिङ्गु करञ्जौ देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटुभिः कटुकत्रयम् ॥ ७ ॥
समांशातिप्रियङ्गुश्च शिरीषो रजनीद्वयम् ।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जने ॥ ८ ॥
नस्य मालेपनञ्चैव स्नान मुद्वर्जनं तथा ।
अपस्मार विषोन्माद कृत्यादीनां निवारणम् ॥ ९ ॥
भूतेभ्यश्च भयं हन्ति राजद्वारि च शस्यते ।
सर्पिरेतेन सिद्धं यत् सगोमूत्रं तदर्थकृत् ॥ [सिद्धार्थकचूर्णम्] ॥
[विषघ्नालेपो यथा] । अजादुग्धतिलै र्लेपो नवनीतेन संयुतः ।
शोथमारुष्करं हन्ति लेपो वा कृष्णसर्पतिलैः ॥ ११ ॥
लाङ्गल्यतिविषा लावूजालिनी मूलवीजकैः ।
लेपो धानशाम्बु संपिष्टः कीट विस्फोट नाशनः ॥१२ ॥
[वर्ण्योलेपो यथा] ॥ रक्तचन्दन मञ्जिष्ठालोध्र कुष्ठप्रियङ्गवः ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ १३ ॥
मातुलुङ्गजटासर्पिः शिलागोशकृतो रसः ।
मुखकान्तिकरो लेपः पिड़काव्यङ्ग-कीलजित् ॥ १४॥
लोध्रधान्य वचालेपस्तारुण्य पीड़कापहः ।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ।
सिद्धार्थकवचालोध्र सैन्धवैश्च प्रलेपनम् ॥ १५ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठावासमाक्षिका ।
लेपः स नवनीतो वा श्वेताश्वखुरजामषी ॥ १६ ॥
अर्कक्षीरहरिद्राभ्यां मर्दयित्वा विलेपनात् ।
मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥ १७ ॥
वटस्य पाण्डुपत्राणि मालतीरक्तचन्दनम् ।

इन्द्रवारुणिका बीज तैलेनाभ्यङ्गमाचरेत् ।
प्रत्यहं तेन जायन्ते कुन्तला भृङ्गसन्निभाः ॥ ३० ॥
अयोरजोभृङ्गराजस्त्रिफला कृष्ण मृत्तिका ।
स्थितमिक्षुरसे मासं लेपनात्पलितं जयेत् ।
धात्रीफलद्वयं पथ्ये द्वे तथैकं विभीतकम् ॥ ३१ ॥
पञ्चाम्रमज्जालोहस्य कर्षैकञ्च प्रदीयते ।
पिष्ट्वा लोहमये भाण्डे स्थापयेदुषितं निशि ।
लेपोऽयं हन्ति न चिरादकालपलितं महत् ॥ ३२ ॥
त्रिफला नीलिकापत्रं लोहं भृङ्गरजः समम् ।
अविमूत्रेण सम्पिष्टं लेपात्कृष्णीकरं स्मृतम् ।
त्रिफला लोहचूर्णं च दाड़िमत्वक् विसं तथा ॥ ३३ ॥
प्रत्येकं पञ्चपलिकं चूर्णं कृत्वा विचक्षणः ।
भृङ्गराज रसस्यापि प्रस्थषट्कं प्रदापयेत् ॥ ३४ ॥
क्षिप्त्वा लोहमये पात्रे भूमिमध्ये निधापयेत् ।
मासमेकं ततः कुर्याच्छागीदुग्धेन लेपनम् ॥ ३५ ॥
कूर्चे शिरसि रात्रौ च सस्नेहैरण्डपत्रकैः ।
स्वपेत्प्रातस्ततः कुर्यात् स्नानं तेन च जायते ॥ ३६ ॥
पलितस्य विनाशश्च त्रिभि र्लेपैर्न संशयः ।
शङ्खचूर्णस्य भागौ द्वौ हरितालश्च भागिकः ॥ ३७ ॥
मनःशिला चार्द्धभागा स्वर्जिका चैक भागिका ।
लेपोऽयं वारिपिष्टस्तु केशानुत्पाट्य दीयते ॥ ३८ ॥
अनया लेप युक्त्या च सप्तवेलं प्रयुक्तया ।
निर्मूलं केशस्थानं स्यात् चपणस्य शिरो यथा ॥ ३९ ॥
तालकं शाणयुग्मं स्यात् षट्शाणं शङ्खचूर्णकम् ।

द्विमाषिकं पलाशस्य क्षारं दत्वा च मर्द्दयेत् ॥४०॥
कदलीं दण्डतोयेन रविपत्र रसेन वा।
अस्यापि सप्तभिर्लेपै रोमृणां शातन मुत्तमम् ॥ ४१ ॥
सुवर्णपुष्पीकासीसं विडङ्गानि मनःशिला।
रोचना सैन्धवञ्चैव लेपनाच्छ्वित्र नाशनम् ॥ ४२ ॥
वायस्येड गजाकुष्ठकृष्णाभिर्गुटिका कृता।
वस्तमूत्रेण सम्पिष्टा प्रलेपात् श्वित्रनाशनी ॥ ४३ ॥
तालकं शाणमात्रं स्याच्चतुःशाणा च वाकुची।
गोमूत्रपिष्टं तच्चूर्णं लेपनात् श्वित्रनाशनम् ॥ ४४ ॥
वाकुची वेतसो लाक्षा काकोडुं वरिका कणा।
रसाञ्जनमयश्चूर्णं तिलाः कृष्णास्तदेकतः ॥ ४५ ॥
चूर्णयित्वा गवाम्पित्तैः पिष्टाच गुटिका कृता।
अस्याः प्रलेपात् श्वित्राणि प्रणश्यन्त्यतिवेगतः ॥ ४६ ॥
धात्रीसर्जं रसश्चैव यवक्षारश्च चूर्णितः।
सौवीरेण प्रलेपोऽयं प्रयोज्यः सिध्मनाशनः ॥ ४७ ॥
दार्वीमूलक बीजानि तालकं सुर दारुच।
ताम्बूलपत्रं सर्वाणि कार्षिकाणि पृथक् पृथक् ॥ ४८ ॥
शङ्खचूर्णं शाणमात्रं सर्वाण्येकत्र कारयेत्।
लेपोऽयं वारिणा पिष्टः सिध्मानां नाशनः परः ॥ ४९ ॥
हरीतकी सैन्धवञ्च गैरिकञ्च रसाञ्जनम्।
विड़ालकोजलैः पिष्टः सर्वनेत्रामयापहः ॥ ५० ॥
रसाञ्जनं व्योषयुतं सम्पिष्य वटकी कृतम्।
कण्डूम्पाकान्वितां हन्ति लेपादञ्जननामिकाम्।
प्रपुन्नाड़स्य बीजानि वाकुची सर्षपास्तिलाः ॥ ५१ ॥

कुष्ठं निशाद्वयं मुस्तम्पिष्ठा तक्रेण चैकतः ।
प्रलेपादस्य नश्यन्ति दद्रूकण्डू विचर्च्चिकाः ।
हेमचीरी विडङ्गानि दरदं गन्धकस्तथा ॥ ५२ ॥
दद्रुघ्नः कुष्टसिन्दूरं सर्वाण्येतानि मर्द्दयेत् ।
धर्त्तूरनिम्ब-ताम्बूलपत्राणां स्वरसैः पृथक् ।
प्रत्यहिलेपमात्रेण पामादद्रू विचर्च्चिकाः ॥ ५३ ॥
कण्डूखारकसा चैव प्रशमं यान्ति वेगतः ।
दूर्वाभया सैन्धवञ्च चक्रमर्द्दः कुठेरकः ।
एभिस्तक्र युतो लेपः कण्डूदद्रू विनाशनः ॥ ५४ ॥
दूर्वानिशायुग्म लेपः कण्डूपामाविनाशनः ।
क्रमिदद्रूहरश्चैव शीतपित्तापहः स्मृतः ।
सिद्धार्थ रजनीकुष्टैः प्रपुन्नाटतिलैः सह ॥ ५५ ॥
कटुतैलेन सम्मिश्रं दद्रूघ्नञ्च प्रलेपनम् ।
रास्ना नीलोत्पलं दारुचन्दनं मधुकं वला ।
घृत चीरयुतो लेपो वातवीसर्प्पनाशनः ॥ ५६ ॥
मृणालं चन्दनं लोध्र मुशीरं कमलोत्पलम् ।
सारिवामलकी पथ्यालेपः पित्तविसर्पनुत् ।
त्रिफला पद्मको शीरसमङ्गा करवीरकम् ॥ ५७ ॥
नलमूल मनन्ता च लेपः श्लेष्म विसर्पहा ।
मांसी सर्ज्जरसो लोध्रं मधुकं सहरेणुकम् ।
मूर्वा नीलोत्पलं पद्मशिरीष कुसुमैः सह ॥ ५८ ॥
प्रलेपः पित्तवातास्त्रे शतधौत घृता मतः ।
आमलं घृतभृष्टन्तु पिष्टं काञ्जिक वारिभिः ।
जयेन् मद्धं प्रलेपेन रक्तं नासिकया स्रुतम् ॥ ५९ ॥

कुष्ठैरण्डतैलेन लेपात् काञ्जिक पेषितम् ।
शिरोर्त्तिं वातजां हन्यात् पुष्पं वा मुचुकुन्दजम् ।
देवदारु नतङ्कुष्टं नलदं विश्व भेषजम् ॥ ६० ॥
स काञ्जिक स्नेहयुक्तो लेपो वात शिरोऽर्त्तिं नुत् ।
चन्दनो शीर यष्ट्याह्व बला व्याघ्र नखोत्पलैः ।
क्षीरपृष्टैः प्रलेपः स्याद्रक्त पित्त शिरोऽर्त्तिजित् ॥ ६१ ॥
धात्री कसेरुह्रीवेर पद्म पद्मक चन्दनैः ।
दूर्वोशीर नलानाञ्च मूलैः कुर्य्यात् प्रलेपनम् ।
शिरोऽर्त्तिं पित्तजां हन्याद्रक्त पित्तरुजं तथा ॥ ६२ ॥
हरेणु नतशैलेय मुस्तैला गुरुदारुभिः ।
मांसी रास्ना रुबूकैश्च लेपः श्लेष शिरोर्त्तिं नुत् ।
शुण्ठी कुष्ट प्रपुन्नाट देवकाष्ठ सरोहिषैः ॥ ६३ ॥
सञ्चोष्णैर्विहितस्तद्वल्लेपः श्लेष्मशिरोर्त्तिं नुत् ।
सारिं वा कुष्ट मधुकवचा कृष्णोत्पलैस्तथा ।
लेपः स काञ्जिक स्नेहः सूर्यावर्त्तार्द्ध वेधयोः ॥ ६४ ॥
वरी नीलोत्पलं दूर्वा तिला कृष्णा पुनर्नवा ।
शङ्खकेऽनन्तवाते च लेपः सर्वशिरोर्त्तिं नुत् ।
अथ लेपविधिश्चान्यः प्रोच्यते सुश्रुसम्मतः ॥ ६५ ॥
द्वौ तस्य कथितौ भेदौ प्रलेपाख्य प्रदेहकौ ।
चर्म्मार्द्रं माहिषं यद्वत्प्रोन्नतं संमितिस्तयोः ।
शीतस्तनुर्विशोषी च प्रलेपः परिकीर्त्तितः ॥ ६६ ॥
आर्द्रो घनस्तथोष्णः स्यात्प्रदेहः श्लेष्मवातहः ।
रोमाभिसुखमादेयौ प्रलेपाख्य प्रदेहकौ ।
वीर्य्यं सम्यक् विशत्याशु रोम कूपैः शिरामुखैः ॥ ६७ ॥

न रात्रौ लेपनं कुर्य्यात् शुष्यमाणं न धारयेत् ।
शुष्यमाण मुपेक्षेत प्रदेहं पीड़नं प्रति ।
तमसा पिहितोऽत्युष्मारोम कूपमुखे स्थितः ॥ ६८ ॥
विना लेपेन निर्य्याति रात्रौ नालेपयेदतः ।
रात्रावपि प्रलेपादिविधिः कार्य्यो विचक्षणैः ।
अपक्क शोथे गम्भीरे रक्त श्लेष्म समुद्भवे ॥ ६९ ॥
आद्यौ शोथहरो लेपो द्वितीयो रक्तसेचनः ।
तृतीयश्चोपनाहः स्यात् चतुर्थः पाचन क्रमः ।
पञ्चमः शोधनो भूयात् षष्ठो रोपण इष्यते ॥७०॥
सप्तमो वर्णकरणो व्रणस्यैते क्रमा मताः ।
[ स यथा ] वीजपूर जटाहिंस्रा देव दारु महौषधम् ।
रास्नाग्निमन्थ लेपोऽयं वातशोथ विनाशनः ॥ ७१ ॥
मधुकं चन्दनं दूर्व्वानलमूलञ्च पद्मकम् ।
उशीरं बालकं पद्मं पित्तशोथे प्रलेपनम् ॥
कृष्णा पुराणपिण्याकं शिग्रुत्वक्सिकताशिवाः ॥ ७२ ॥
मूत्रपिष्टः सुखोष्णोऽयं प्रदेहः श्लेष्मशोथहा
द्वे निशे चन्दने द्वे च शिवादूर्व्वा पुनर्नवा ।
उशीरं पद्मकं लोध्रं गैरिकं च रसाञ्जनम् ॥ ७३ ॥
आगन्तुजे रक्तजे च शोथे कुर्य्यात्प्रलेपनम् ।
शणमूलकशिग्रूणां फलानि तिल सर्षपाः
सक्तवः किण्वमतसी प्रदेहः पाचनः स्मृतः ॥७४॥
दन्तीचित्रक मूलत्वक् स्नुह्यर्क पयसा गुडैः ।
भल्लातकास्थिकासीस सैन्धवैर्द्दारणः स्मृतः ।
चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः ॥ ७५ ॥

कपोतकङ्कगृध्राणां मलं लेपेन दारुणम् ।
स्वर्जिका यावशूकाद्या: क्षारालेपेन दारुणा: ॥ ७६ ॥
हैमक्षीर्यास्तथा लेपी व्रणी परमदारुण: ।
तिल सैन्धव यष्ट्याह्वनिम्बपत्र निशायुगै: ॥ ७७ ॥
त्रिवृत् घृतयुतै: पिष्टै: प्रलेपो व्रण शोधन: ।
निम्बपत्र घृतक्षौद्रदार्वी मधुक संयुत: ॥ ७८ ॥
तिलैश्च सह संयुक्तो लेप: शोधन रोपण: ।
करञ्जारिष्टनिर्गुण्डी लेपो हन्याद्व्रण क्रमीन् ।
लशुनस्याथ वा लेपो हिङ्गु निम्बभवोऽथवा ॥ ७९ ॥
निम्बपत्र तिलादन्ती त्रिवृत्सैन्धव माक्षिकम् ।
दुष्टव्रण प्रशमनो लेप: शोधन रोपण: ।
मदनस्य फलन्तिक्तम्पिष्टा काञ्जिक वारिणा ॥ ८० ॥
कोष्णं कुर्यान्नाभिलेपं शूलशान्तिर्भवेत्तत: ।
शिग्रु शेफालिकैरण्डयवगोधूम मुद्गकै: ।
सुखोष्णो बहुलो लेप: प्रयोज्यो वात विद्रधौ ॥ ८१ ॥
पैत्तिके सर्पिषा लाजामधुकै: शर्करान्वितै: ।
प्रलिम्पेत् क्षीर पिष्टैर्वा पयस्योशीर चन्दनै: ।
इष्टिकासिकतालोह किट्टङ्गो श क्ता सह ॥ ८२ ॥
सुखोष्ण: स्यात्प्रदेहोऽयं मूत्रै: स्यात् श्लेषविद्रधौ ।
रक्तचन्दन मञ्जिष्ठानिशामधुक गैरिकै: ।
क्षीरेण विद्रधौ लेपो रक्तागन्तु निमित्तजे ॥ ८३ ॥
निचुल: शिग्रुबीजानि दशमूल मथापिवा ।
प्रदेहो वातगण्डेषु सुखोष्ण: सम्प्रदीयते ।
देवदारु विशालेच कफगण्डे प्रदेहक: ॥ ८४ ॥

सर्षपारिष्ट पत्राणि दग्ध्वा भल्लातकैः सह।
छागमूत्रेण सम्पिष्टमपचीघ्नं प्रलेपनम्।
सर्षपान् शिग्रुवीजानि शण वीजातसी-यवान् ॥८५॥
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत्
गण्डमालार्वुदं गण्डं लेपेनानेन शाम्यति।
प्रच्छयित्वा क्षुरेणाङ्गं केवलानिलपीड़ितम् ॥ ८६ ॥
तत्प्रदेहं दद्याच्च पिष्टगुञ्जाफलैः क्षतम्।
तेनापवाहुजा पीड़ा विश्वाची गृध्रसी तथा ॥ ८७ ॥
अन्यापि वातजा पीड़ा प्रशमं याति वेगतः।
धत्तूरैरण्ड निर्गुण्डीवर्षाभूशिग्रु सर्षपैः ॥ ८८ ॥
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम्।
अजाजीहपुषा कुष्ठमेरण्ड वदरान्वितम् ॥ ८९ ॥
काञ्जिकेन तु सम्पिष्टं कुरण्डघ्नं प्रलेपनम्।
करवीरस्य मूलेन परिपिष्टेन वारिणा ॥ ९० ॥
असाध्योऽपि व्रजत्यस्तं लिङ्गोत्था रुक् प्रलेपनात्।
दहेत्कटाहे त्रिफलां तां मषीम्मधु संयुताम् ॥ ९१ ॥
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम्।
रसाञ्जनं शिरीषेण पथ्यया च समन्वितम् ॥ ९२ ॥
सक्षौद्रं लेपनं योज्यमुपदंश गदापहम्।
चिञ्चिणी त्वक् मषीचूर्णं मुपदंश-गदापहम् ॥ ९३ ॥
अग्निदग्धे तु गाक्षीरीप्लक्ष गैरिक चन्दनैः।
सामृतैः सर्पिषा स्निग्धैः स्वालेपं कारयेद्भिषक् ॥ ९४ ॥
तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत्।
यवा न्दग्ध्वा मषीकार्या तैलेन युतया तया ॥ ९५ ॥

कपोतकङ्कगृध्राणां मलं लेपेन दारणम् ।
स्वर्जिका यावशूकाद्याः क्षारालेपेन दारणाः ॥ ७६ ॥
हेमक्षीर्यास्तथा लेपो व्रणे परमदारुणः ।
तिल सैन्धव यष्ट्याह्वनिम्बपत्र निशायुगैः ॥ ७७ ॥
त्रिवृत् घृतयुतैः पिष्टैः प्रलेपो व्रण शोधनः ।
निम्बपत्र घृतक्षौद्रदार्वी मधुक संयुतः ॥ ७८ ॥
तिलैश्च सह संयुक्तो लेपः शोधन रोपणः ।
करञ्जारिष्टनिर्गुण्डी लेपो हन्याद्व्रण क्रमीन् ।
लशुनस्याथ वा लेपो हिङ्गु निम्बभवोऽथवा ॥ ७९ ॥
निम्बपत्र तिलादन्ती त्रिवृत्सैन्धव माक्षिकम् ।
दुष्टव्रण प्रशमनो लेपः शोधन रोपणः ।
मदनस्य फलन्तित्ताम्पिष्ट्वा काञ्जिक वारिणा ॥ ८० ॥
कोष्णं कुर्यात्ताभिलेपं शूलशान्तिर्भवेत्ततः ।
शिग्रु शेफालिकैरण्डयवगोधूम मुद्गकैः ।
सुखोष्णो बहुलो लेपः प्रयोज्यो वात विद्रधौ ॥ ८१ ॥
पैत्तिके सर्पिषा लाजामधुकैः शर्करान्वितैः ।
प्रलिम्पेत्क्षीर पिष्टैर्वा पयस्योशीर चन्दनैः ।
इष्टिकासिकतालोह किट्टङ्गो श कृता सह ॥ ८२ ॥
सुखोष्णः स्यात्प्रदेहोऽयं मूत्रैः स्यात् श्लेष्मविद्रधौ ।
रक्तचन्दन मञ्जिष्ठानिशामधुक गैरिकैः ।
क्षीरेण विद्रधौ लेपो रक्तागन्तु निमित्तजे ॥ ८३ ॥
निचुलः शिग्रुबीजानि दशमूल मथापिवा ।
प्रदेहो वातगण्डेषु सुखोष्णः सम्प्रदीयते ।
देवदारु विशालेच कफगण्डे प्रदेहकः ॥ ८४ ॥

सर्षपारिष्ट पत्राणि दग्ध्वा भल्लातकैः सह।
छागमूत्रेण सम्पिष्टमपचीघ्नं प्रलेपनम्।
सर्षपान् शिग्रुवीजानि शण वीजातसी-यवान् ॥८५॥
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत्
गण्डमालार्वुदं गण्डं लेपेनानेन शाम्यति।
प्रच्छयित्वा क्षुरेणाङ्गं केवलानिलपीड़ितम् ॥ ८६ ॥
तत्प्रदेहं दद्याच्च पिष्टगुञ्जाफलैः कृतम्।
तेनापवाहुजा पीड़ा विश्वाची गृध्रसी तथा ॥ ८७ ॥
अन्यापि वातजा पीड़ा प्रशमं याति वेगतः।
धत्तूरैरण्ड निर्गुण्डीवर्षाभूशिग्रु सर्षपैः ॥ ८८ ॥
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम्।
अजाजीहपुषा कुष्ठमेरण्ड वदरान्वितम् ॥ ८९ ॥
काञ्जिकेन तु सम्पिष्टं कुरण्डघ्नं प्रलेपनम्।
करवीरस्य मूलेन परिपिष्टेन वारिणा ॥ ९० ॥
असाध्योऽपि व्रजत्यस्तं लिङ्गोत्था रुक् प्रलेपनात्।
दहेत्कटाहे त्रिफलां तां मषीम्मधु संयुताम् ॥ ९१ ॥
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम्।
रसाञ्जनं शिरीषेण पथ्यया च समन्वितम् ॥ ९२ ॥
सक्षौद्रं लेपनं योज्यमुपदंश गदापहम्।
त्रिफलाया मषीचूर्णं मुपदंश-गदापहम् ॥ ९३ ॥
अग्निदग्धे तु गाक्षीरीप्लक्ष गैरिक चन्दनैः।
सामृतैः सर्पिषा स्निग्धैः स्वालेपं कारयेद्भिषक् ॥ ९४ ॥
तिन्दुकीत्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत्।
यवान्दग्ध्वा मषीकार्या तैलेन युतया तया ॥ ९५ ॥

दृव्यात्सर्वाग्निदग्धेषु प्रलेपो व्रणरोपणः ।
पलाशोडुम्बर फलैस्तिलतैल समन्वितैः । ९६ ॥
मधुना योनि मालिप्य गाढ़ीकरण मुत्तमम् ।
माकन्दमूल संयुक्त मधु कर्पूर लेपनात् ॥ ९७ ॥
गतेऽपि यौवने स्त्रीणां योनिर्गाढ़्यति जायते ।
मरिचं सैन्धवं कृष्णा तगरं वृहतीद्वयम् ॥ ९८ ॥
अपामार्गस्तिला कुष्ठं यवामाषाश्च सर्षपाः ।
अश्वगन्धाच तच्चूर्णं मधुना सह योजयेत् ॥ ९९ ॥
अस्य सन्तत लेपेन मर्द्दनाच्च प्रजायते ।
लिङ्गवृद्धिः स्तनोत्सेधः संहति र्भुजकर्णयोः ॥ १०० ॥
सिताश्व गन्धा सिन्धूत्थच्छागक्षीरैर्घृतं पचेत् ।
तल्लेपान्मर्द्दनाल्लिङ्गे वृद्धिः सञ्जायते परा ॥ १०१ ॥
कर्पूर पूरणान्नित्यं स्थूलः स्याच्च प्रजापतिः ।
काकजङ्घा जयन्तीच कर्पूरं पूरणादपि ॥ १०२ ॥
शिश्नमुत्थापनं कुर्याद्रासभस्य यथा तथा ।
हयगन्धा सुभल्लातवीजं कर्पूर मामलम् ॥ १०३ ॥
महिषी नवनीतेन मर्द्दयेत्प्रत्यहं पुनः ।
शिश्न मुत्थापनं कुर्यात् स्थूलं हयखरोपमम् ॥ १०४ ॥
इन्द्रवारुणिका पत्ररसैः सूतं विमर्द्दयेत् ।
रक्तस्य करवीरस्य काष्ठेन च मुहुर्मुहुः ॥ १०५ ॥
तल्लिप्त लिङ्ग सम्भोगात् योनिद्रावोऽतिजायते ।[इति योनिद्रावणम्]
ताम्बूलपत्र चूर्णन्तु चूर्णं कुष्ठशिवाभवम् ॥ १०६ ॥
वारिणा लेपनं कुर्याद्गात्र दौर्गन्ध्यनाशनम् ।
कुलत्थसत्तवः कुष्ठं मांसी चन्दनजं रजः ॥ १०७ ॥

सप्तवर्षाणकस्यैव त्वक् चैवैकत्र कारयेत् ।
स्वेददौर्गन्ध्यमाशश्च जायेत स्यावधूलनात् ॥ १०८ ॥
वचासौवर्चलं कुष्ठरजन्यौ मरिचानि च ।
एतल्लेप प्रभावेन वशीकरण मुत्तमम् ॥ १०९ ॥
बदरीकेशमादाय हस्तार्के गुरुपुष्ययोः ।
मूलार्के भृगुरेवत्यां भौमाश्विन्यां शुभे दिने ॥ ११० ॥
बुधानुराधा नक्षत्रे सोमश्रवण संयुगे ।
कदाचित् स्वाति रोहिण्यां मध्यरात्रौ विशेषतः ॥१११॥
कृष्णपक्षे चतुर्दश्यामष्टम्यामेकदा क्वचित् ।
कर्पूरं निक्षिपेत्तत्र रजकस्य शिलोपरि ॥ ११२ ॥
नग्नवेषधरो भूत्वा सन्ध्याकाले ततोऽन्यदा ।
ताम्बूलं दीयते यस्यास्तत् कर्पूरयुतं पुनः ॥ ११३ ॥
सावश्यस्त्वायते नूनं यावज्जीवं शिवोदितम् । [वशीकरण लेपः]
[मूर्द्ध तैल] अभ्यङ्गः परिषेकश्चपिचुर्वस्तिरिति क्रमात् ।
मूर्द्ध तैलं चतुर्द्धा स्याद्बलवच्च यथोत्तरम् ।११४॥
तयोऽभ्यङ्गादयः सर्वे प्रसिद्धाः सर्वतः स्मृताः ।
शिरोवस्ति विधिश्चात्र प्रोच्यते सुश्रु सम्मतः ॥ ११५ ॥
शिरा वस्तिश्चर्मणः स्याद्द्विमुखो द्वादशाङ्गुलः ।
शिरः प्रमाण स्तं बध्वा मस्तके माषपिष्टकैः ॥११६॥
सन्धिरोधं विधायाम्बुस्नेहैः कोष्णैः प्रपूरयेत् ।
तावद्धार्यस्तु यावत्स्यान्नासाकर्ण मुखस्रुतिः ॥ ११७ ॥
वेदनोपशमो वापि मात्राणां वा सहस्रकम् ।
विना भोजन मेवात्र शिरोवस्तिः प्रशस्यते ॥ ११८ ॥
प्रयोज्यस्तु शिरोवस्तिः पञ्चसप्ताहमेववा ।

विमोच्य शिरसो वस्तिं गृह्णीयाच्च समन्ततः ॥ ११९ ॥
अर्द्धकायं ततः कोष्णनीरैः स्नानञ्च कारयेत् ।
अनेन दुर्ज्जया रोगा वातजा यान्ति संचयम् ॥ १२० ॥
शिरः कम्पादयस्तेन सर्वकालेषु युज्यते ।
[कर्णपूरणम्] स्वेदयेत्कर्णमूले तु किञ्चिन्नुः पार्श्वशायिनः १२१
मूत्रैः स्नेहैः रसैः कोष्णैस्ततः श्रोत्रं प्रपूरयेत् ।
कर्णञ्च पूरितं रक्षेच्छतं पञ्च शतानि च ॥१२२ ॥
सहस्रं वापि मात्राणां श्रोत्रकण्ठ शिरोगदे ।
स्वजानुतः करावर्त्तं कुर्य्याच्छोटिकया युतम् ॥ १२३ ॥
एषा मात्राभवेदेका सर्वत्रैवैष निश्चयः ।
रसाद्यैः पूरणं कर्णे भोजनात्प्राक् प्रशस्यते ॥ १२४ ॥
तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ।
[तद्यथा] पीतार्कपत्रमाज्येन लिप्तं वह्नौ प्रतापयेत् ॥ १२५ ॥
तद्रसः श्रवणे क्षिप्ता कर्णशूलहरः परः ।
कर्णशूलातुरे कोष्णं छागमूत्रं ससैन्धवम् ॥ १२६ ॥
निःक्षिपेत्तेन शाम्यन्ति शूल पाकादिका रुजः ।
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च ॥ १२७ ॥
कटूष्णं कर्णयो र्देयमेतद्वा वेदनापहम् ।
कपित्थमातुलङ्गाम्ल शृङ्गवेररसैः शुभैः ॥ १२८ ॥
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये ।
अर्काङ्कुरानम्ल पिष्टां स्तैलाक्तान् लवणान्वितान् ॥ १२९ ॥
सन्निदध्यात् स्नुहीकाण्डे कोरितेन च्छदावृते ।
पुटपाकक्रमं कृत्वा रसैस्तस्य प्रपूरयेत् ॥ १३० ॥
सुखोष्णै स्तेन शाम्यन्ति कर्णपीड़ाः सुदारुणाः ।

महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च ॥ १३१ ॥
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ।
यत्तैलञ्च्यवते तेभ्यः सुखोष्णं तेन पूरयेत् ॥ १३२ ॥
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ।
एवं स्याद्दीपिकातैलं कुष्ठदेवतरोस्तथा ॥ १३३ ॥
तैलं स्योनाक मूलेन मन्देऽग्नौ परिपाचितम् ।
हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् ॥ १३४ ॥
कल्कक्वाथेन यष्ट्याह्वकाकोली माषधान्यकैः ।
शूकरस्य वसापक्वा कर्णनादार्तिनाशिनी ॥ १३५ ॥
स्वर्जिकामूलकं शुष्कं हिङ्गुलणा समन्वितम् ।
शतपुष्पा च तैस्तैलं पक्वं सुक्त चतुर्गुणम् ॥ १३६ ॥
प्रणादं शूलवाधिर्यं स्रावं कर्णस्य नाशयेत् ।
अपामार्गक्षार जले तत्क्षारं कल्कितं क्षिपेत् ॥ १३७ ॥
तेन पक्वं जयेत्तैलं वाधिर्यं कर्णनादकम् ।
शम्बूकस्य तु मांसेन पचेत्तैलं सुसार्षपम् ॥ १३८ ॥
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ।
चूर्णपञ्च कषायाणां कपित्थरसमेव च ॥ १३९ ॥
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ।
तिन्दुकान्यभया लोध्रं समंगा चामलक्यपि ॥ १४० ॥
ज्ञेयाः पञ्चकषायास्तु कर्मण्यस्मिन् भिषग्वरैः ।
स्वर्जिकाचूर्णं संयुक्तं वीजपूररसं क्षिपेत् ॥ १४१ ॥
कर्णस्राव रुजा दाहाः प्रशाम्यन्ति न संशयः ।
आम्रजम्बूः प्रवालानि मधूकस्य वटस्य च ॥ १४२ ॥
एभिः संसाधितं तैलं पूतिकर्ण प्रशान्ति कृत् ।

पूरणं हरितालेन गवां मूत्रयुतेन च ॥ १४३ ॥
अथवा सार्षपं तैलं कर्णकीटहरं परम् ।
स्वरसं शिग्रुमूलस्य सूर्य्यावर्त्तं रसं तथा ॥ १४४ ॥
त्र्यूषणं चूर्णितञ्चैव कपिकच्छू जटारसम् ।
एकैकत्र क्षिपेत्कर्णे रक्तकीटहरं परम् ।
सक्षो हिङ्गु निहन्त्याशु कर्णकीटं सुदारुणम् ॥ १४५ ॥

## द्वादशोऽध्यायः ।

### अथ शोणितस्रावविधिः ।

शोणितं स्रावयेज्जन्तोरामयं प्रसमीक्ष्य च ।
प्रस्थं प्रस्थार्द्धकं वापि प्रस्थार्द्धार्द्धमथापि वा ॥ १ ॥
शरत्काले स्वभावेन कुर्य्याद्रक्तस्रुतिं नरः ।
त्वग्दोष ग्रन्थिशोथाद्यानस्यूरक्तस्रुतेर्यतः ॥ २ ॥
मधुरं वर्णतोरक्तमशीतोष्णं तथागुरुः ।
शोणितं स्निग्धविस्रं स्याद्विदाह चास्य पित्तवत् ॥ ३ ॥
विस्रता द्रवता रागश्चलनं विलयस्तथा ।
भूम्यादि पञ्चभूतानामिते रक्त गुणाः स्मृताः ॥ ४ ॥
रक्ते दुष्टे वेदना स्यात्पाको दाहश्च जायते ।
रक्तमण्डलताकण्डूः शोथ च पीड़कोद्गमः ॥ ५ ॥
दृष्टे रक्ताङ्गनेत्रत्वं शिराणां पूरणे तथा ।
गात्राणां गौरवं निद्रामेदोदाहश्च जायते ॥ ६ ॥
क्षीणेऽम्ल मधुराकाङ्क्षा मूर्च्छा त्वचि विरूक्षिता ।

शैथिल्यञ्च शिराणां स्याद्वातादुन्मार्ग गामिता ॥ ७ ॥
अरुणं फेनिलं रूक्षं परुषं तनु शीघ्रगम् ।
अस्कन्दि सूचीनिस्तोदि रक्तं स्याद्वात-दूषितम् ॥ ८ ॥
पित्तेन पीतं हरितं नीलं श्यावञ्च विस्रुतम् ।
अस्कन्दमुष्णं मक्षिकाणां पिपीलानामनिष्टकम् ॥ ९ ॥
शीतलं वहुलं स्निग्धं गैरिकोदक सन्निभम् ।
मांसपेशीप्रभं स्कन्दिमन्दगं कफदूषितम् ॥ १० ॥
द्विदोष दुष्टं संसृष्टं त्रिदुष्टं पूतिगन्धकम् ।
सर्वलक्षण संयुक्तं काञ्जिकाभञ्च जायते ॥ ११ ॥
विषदुष्टं भवेच्छ्यावं नासिकोन्मार्गगन्तथा ।
विस्रं काञ्जिक सङ्काशं सर्व्वकुष्ठकरं तथा ॥ १२ ॥
इन्द्रगोपप्रभं ज्ञेयं प्रकृतिस्थ मसंहतम् ।
शोथे दाहेऽङ्गपाके च रक्तवर्णेऽसृजस्स्रुतौ ॥ १३ ॥
वातरक्ते तथा कुष्ठे सपीडे दुर्जयेऽनिले ।
पाणिरोगे श्लीपदे च विषदुष्टे च शोणिते ॥ १४ ॥
ग्रन्थ्यर्वुदा पची क्षुद्ररोग रक्ताधिमन्थिषु ।
विदारीस्तनरोगेषु गात्राणां सादगौरवे ॥ १५ ॥
रक्ताभिष्यन्द तन्द्रायां पूतिघ्राणास्य देहके ।
यकृत्प्लीह विसर्पेषु विद्रधौ पीड़कोद्गमे ॥ १६ ॥
कर्णौष्ठघ्राण वक्त्राणां पाके दाहे शिरोरुजि ।
उपदंशे रक्तपित्ते रक्त स्रावः प्रशस्यते ॥ १७ ॥
एषु रोगेषु शृङ्गैर्वा जलौकालावुकैरपि ।
अथवापि शिरामोक्षैः कुर्याद्रक्त स्रुतिं नरः ॥ १८ ॥
न कुर्व्वीत शिरामोक्षं कृशस्यातिव्यवायिनः ।

क्लीवस्य भीरोर्गर्भिण्याः सूतिका पाण्डुरोगिणाम् ॥ १९ ॥
पञ्चकर्म्म विशुद्धस्य पीतस्नेहस्य चार्शसाम् ।
सर्वाङ्गशोथयुक्तानामुदरिश्वासकासिनाम् ॥ २० ॥
छर्द्यतीसारदुष्टानामतिस्विन्नतनोरपि ।
ऊनषोड़शवर्षस्य गतसप्ततिकस्य च ॥ २१ ॥
आघातस्रुत रक्तस्य शिरामोक्षो न शस्यते ।
एषां चात्ययिके रोगे जलौकाभिस्तु निर्हरेत् ॥ २२ ॥
तथाच विष दुष्टानां शिरामोक्षोऽपि शस्यते ।
गोशृङ्गेण जलौकाभिरलावूभिरपि त्रिधा ॥ २३ ॥
वातपित्तकफैर्दुष्टं शोणितं स्रावयेद्बुधः ।
द्विदोषाभ्यां तु संदुष्टं त्रिदोषैरपि दूषितम् ॥ २४ ॥
शोणितं स्रावयेद्युक्त्या शिरामोक्षैः पदैस्तथा ।
गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं बलात् ॥ २५ ॥
जलौका हस्तमात्रं तु तुम्बी च द्वादशाङ्गुलम् ।
पदमङ्गुल मात्रस्य शिरा सर्वाङ्ग शोधिनी ॥ २६ ॥
शीते निरन्ने मूर्च्छार्त्ति निद्राभीति मदश्रमैः ।
युतानां न स्रवेद्रक्तं तथा विण्मूत्र सङ्गिनाम् ॥ २७ ॥
अप्रवर्त्तित रक्ते च कुष्ठत्रिकटु सैन्धवैः ।
मर्द्दयेद्व्रण वक्त्रं च तेन सम्यक् प्रवर्त्तते ॥ २८ ॥
तस्मान्न शीतेनात्युष्णे नातिस्विन्नेऽतितापिते ।
पीत्वा यवागूं स्तृप्तस्य स्रावयेच्छोणितं बुधः ॥ २९ ॥
अतिस्विन्नस्योष्ण काले तथैवातिशिरा व्यधात् ।
अति प्रवर्त्तते रक्तं तत्र कुर्य्यात्प्रतिक्रियाम् ॥ ३० ॥
अतिप्रवृत्ते रक्ते च लोध्र सर्जरसाञ्जनैः ।

यवगोधूम चूर्णैर्वा धवधन्वन गैरिकैः ॥ ३१ ॥
सर्पनिर्मोक चूर्णैर्वा भस्मना क्षौमवस्त्रयोः ।
मुखं व्रणस्य बध्वा च शीतै श्चोपचरेत् व्रणम् ॥ ३२ ॥
विध्ये दूर्द्धं शिरां ताञ्च दहेत् क्षारेण वाग्निना ।
व्रणं काषायः सन्धत्ते रक्तं स्कन्दयते हिमम् ॥ ३३ ॥
व्रणास्यं पाचयेत् क्षारो दाहः सङ्कोचये च्छिराम् ।
[सयथा दाहः] वामाण्डशोथे दक्षस्य करस्याङ्गुष्ठ मूलजाम् ॥ ३४ ॥
दहेच्छिरां व्यत्यये तु वामाङ्गुष्ठ शिरां दहेत् ।
शिरादाह प्रभावेन मुष्कशोथः प्रणश्यति ॥ ३५ ॥
विशूच्यां पार्ष्णि दाहेन जायतेऽग्नेः प्रदीपनम् ।
सङ्कुचन्ति यतस्तेन रसश्लेष्मवहाः शिराः ॥ ३६ ॥
यदा वृश्चिकदृष्टोद्दीहोः शिशोः सञ्जायतेऽसृजः ।
तदा तत् स्थानदाहेन सङ्कुचन्त्यसृजः शिराः ॥ ३७ ॥
रक्ते दुष्टेऽवशिष्टेऽपि व्याधिर्नैव प्रकुप्यति ।
अतः स्थेयं सावशेषे रक्ते नातिक्रमो हितः ॥ ३८ ॥
आन्ध्यमाक्षेपकं तृष्णां तिमिरं शिरसो रुजम् ।
पक्षाघातं श्वासकासौ हिक्कां दाहञ्च पाण्डुताम् ॥ ३९ ॥
कुरुतेऽतिस्रुतं रक्तं मरणं वा करोति च ।
देहस्योत्पत्तिरसृजा देह स्तेनैव धार्य्यते ॥ ४० ॥
विना तेन व्रजेज्जीवो रक्षेद्रक्तं मतो बुधः ।
शीतोपचारैः कुपिते स्रुतरक्तस्य मारुते ॥ ४१ ॥
कोष्णेन सर्पिषा शोथं सव्यथं परिषेचयेत् ।
क्षीणस्यैण शशोरभ्रहरिण छागमांसजः ॥ ४२ ॥
रसः समुचितः पाने क्षीरं वा षष्टिका हिता ।

पीड़ा शान्तिर्लघुत्वञ्च व्याधेरुद्रेक सम्भवः ॥ ४३ ॥
मनः स्वास्थ्यं भवेच्छिङ्गं सम्यक्स्नाविते स्नजि ।
व्यायामं मैथुनं क्रोधशीत स्नान प्रवातकान् ॥ ४४ ॥
एकाशनं दिवास्वप्नं चाराम्ल कटु भोजनम् ।
शोकं वाद्यमजीर्णं च त्यजेदाबल-दर्शनात् ॥ ४५ ॥

अथ त्रयोदशोऽध्यायः ।

[ नेत्रप्रसादनकर्म्माणि ] सेक आश्चोतनं पिण्डी बिडालस्तर्पणं तथा
पुटपाकोऽञ्जनं चैभिः कल्कैर्नेत्र मुपाचरेत् ॥ १ ॥
सेकास्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः ।
मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः ॥ २ ॥
स चापि स्नेहनो वाते रक्ते पित्तेच रोपणः ।
लेखनश्च कफे कार्य्यं स्तस्य मात्राऽधुनोच्यते ॥ ३ ॥
षड्वाक्शतैः स्नेहनेषु चतुर्भिश्चैव रोपणे ।
वाक्शतैश्च त्रिभिः कार्य्यः सेको लेखनकर्मणि ॥ ४ ॥
कार्य्यस्तु दिवसे सेको रात्रौ चात्यन्तिके मदे ।
[ स यथा ] एरण्डलवक्पत्र मूलैः शृतमाजं पयो हितम् ॥ ५ ॥
सुखोष्णं सेचनं नेत्रे वाताभिष्यन्दनाशनम् ।
परिषेको हितं नेत्रे पयः कोष्णं ससैन्धवम् ॥ ६ ॥
रजनी दारुसिद्धं वा सैन्धवेन समन्वितम् ।
वाताभिष्यन्दशमनं हितं स्यात् मारुते पयः ॥ ७ ॥
शुष्काक्षिपाके च हितमिदं सेचनकं सदा ।
सौवीरं मधुकं तुल्यं घृतभृष्टसुचूर्णितम् ॥ ८ ॥
छागक्षीरे स्थितं सेकात्पित्त रक्ताभिघात जित् ।
त्रिफलालोध्रयष्टीभिः शर्कराभद्र मुस्तकैः ॥ ९ ॥

पिष्टैःशीताम्बुना सेको रक्ताभिष्यन्दनाशनः ।
लाक्षामधुकमञ्जिष्ठा लोध्रकालानुसारि वा ॥ १० ॥
पुण्डरीक युतः सेको रक्ताभिष्यन्दनाशनः ।
खतं लोध्रं घृते भ्रष्टं चूर्णितं पटविस्रुतम् ॥ ११ ॥
उष्णाम्बुना विमर्दितं सेकाच्छूलघ्न मम्बके ।
[अथ आश्चोतनम्] अथाश्चोतनकं कार्य्यं निशायां न कथञ्चन ॥१२॥
उन्मीलितेऽक्षि दृक् मध्ये विन्दुभिर्द्व्यङ्गुलाहितम् ।
विन्दवोऽष्टौ लेखनेषु स्नेहने दश विन्दवः ॥१३॥
रोपणे द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः ।
उष्णे च शीत रूपाः स्युः सर्वत्रै वैष निश्चयः ॥ १४ ॥
वाते तिक्तं तथास्निग्धं पित्ते मधुरशीतलम् ।
तिक्तोष्ण रूक्षञ्च कफे क्रमादाश्चोतनं हितम् ॥ १५ ॥
आश्चोतनानां सर्वेषां मात्रा स्याद्वाक् शतं हिता ।
निमेषोन्मेषणं पुंसा मङ्गुल्या च्छोटिकाऽथवा ॥ १६ ॥
गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः ।
[ तद्यथा ] विल्वादि पञ्चमूलेन वृहत्येरण्ड शिग्रुभिः ॥ १७ ॥
क्वाथ आश्चोतनं कोष्णो वाताभिष्यन्दनाशनः ।
अम्बुपिष्टैर्निम्बपत्रैः स्त्वचं लोध्रस्य लेपयेत् ॥ १८ ॥
प्रताप्य वह्निना पिष्टा तद्रसो नेत्र पूरणात् ।
वातोत्थं रक्तपित्तोत्थमभिष्यन्दं विनाशयेत् ॥ १९ ॥
त्रिफलाश्चोतनं नेत्रे सर्वाभिष्यन्दनाशनम् ।
स्त्रीस्तन्याश्चोतनं नेत्रे रक्तपित्तानिलार्त्तिजित् ॥ २० ॥
क्षीरसर्प्पिर्घृतं वापि वातरक्त रुजं जयेत् ।
[अथ पिण्डिका] पिण्डिका वर्त्तिका प्रोक्ता बध्यते पट्टवस्त्रकैः ॥२१॥

नेत्राभिष्यन्दयोर्य्या सा ग्रयोष्वपि निबध्यते ।
अभिष्यन्दाभि मन्थे च संजाते श्लेष्म सम्भवे ॥ २२ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य शिरस्तीक्ष्णैर्विरेचयेत् ।
अधिमन्थेषु सर्वेषु ललाटे वेधयेच्छिराम् ॥ २३ ॥
अशान्ते सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ।
अभिष्यन्देषु सर्वेषु बध्नीयात्पिण्डिकां बुधः ॥२४ ॥
वाताभिष्यन्दशान्त्यर्थं स्निग्धोष्णा पिण्डिका भवेत् ।
एरण्डपत्रमूलत्वक्निर्मिता वातनाशिनी ॥ २५ ॥
पित्ता भिष्यन्दनाशाय धात्री पिण्डीसुखावहा ।
महानिम्बदलोद्भूता पिण्डी वा पित्तनाशिनी ॥ २६ ॥
शिग्रुपत्र कृतापिण्डी श्लेष्माभिष्यन्द नाशिनी ।
निम्बपत्र कृतापिण्डी श्लेष्मपित्तहरा भवेत् ॥ २७ ॥
त्रिफला पिण्डिका प्रोक्ता नाशने श्लेष्मपित्तयोः ।
पिष्टा काञ्जिकतोयेन घृतभृष्टा च पिण्डिका ॥ २८ ॥
लोध्रस्य हरति क्षिप्रमभिष्यन्दमसृग्भवम् ।
शुण्ठी निम्बदलैःपिण्डी सुखोष्णास्वल्पसैन्धवा ॥ २९ ॥
धार्या चक्षुषि संयोगात् शोथकण्डूव्यथाहरा ।
[अथबिडालकः] बिडालको बहिर्लेपो नेत्रे पक्ष्म विवर्जिते ॥३०॥
तस्य मात्रा परिज्ञेया मुखालेपविधानवत् ।
[सयथा] यष्टीगैरिक सिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः ॥ ३१ ॥
जलपिष्टैर्वहिर्लेपः सर्वनेत्रामयापहः ।
रसाञ्जनेन वालेपः पथ्याबिम्बदलैरपि ॥ ३२ ॥
कुमारिकाग्नि पत्रैर्वा दाडिमीपल्लवै रपि ।
वचाहरिद्रा निम्बैर्वा तथानागर गैरिकैः ॥ ३३ ॥

दग्ध्वा ससैन्धवं लोध्रं मधूच्छिष्टयुतेघृते ।
पिष्टमञ्जनलेपाभ्यां सद्यो नेत्ररुजापहम् ॥ ३४ ॥
लौहस्य पात्रे संघृष्टो रसोनिम्बुफलोद्भवः ।
किञ्चिद्घनो वह्निलेपान्नेत्र बाधां व्यपोहति ॥ ३५ ॥
सञ्चूर्ण्य मरिचं केशराज स्वरस मर्दनात् ।
लेपनाद्दर्मणां नाशं करोत्येष प्रयोगराट् ॥ ३६ ॥
स्विन्नां भित्वा विनिष्पीड्य भिषगञ्जननामिकाम् ।
शिलैलानत सिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥ ३७ ॥
[ अथ तर्प्पणम् । अथ तर्प्पणकं वच्मि नेत्र तृप्तिकरं परम् ।
यद्रूक्षं परिशुष्कञ्च नेत्रं कुटिल माविलम् ॥ ३८ ॥
शीर्ण पक्ष्म शिरोत्पात कृच्छ्रोन्मीलन संयुतम् ।
तिमिरार्बुद शुक्राद्यैरभिष्यन्दाधि मन्थकैः ॥ ३९ ॥
शुष्काक्षिपाक शोथाभ्यां युतं वात विपर्य्ययैः ।
तन्नेत्रं तर्प्पणे योज्यं नेत्ररोग विशारदैः ॥ ४० ॥
दुर्दिनात्युष्ण शीतेषु चिन्तायां सम्भ्रमेषु च ।
अशीतोपद्रवे चाक्षितर्प्पणं न प्रशस्यते ॥ ४१ ॥
वातातपरजोहीने देशे चोत्तान शायिनः ।
आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ ॥ ४२ ॥
समौ दृढ़ावसंबाधौ कर्त्तव्यौ नेत्र कोशयोः ।
पूरयेत् घृतमण्डेन विलीनेन सुखोदकैः ॥ ४३ ॥
अथवा शतधौतेन सर्प्पिषा क्षीरजेन वा ।
निमग्नान्यक्षिपक्ष्माणि यावत् स्युस्तावदेव हि ॥ ४४ ॥
पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः ।
धारयेद्वर्त्म रोगेषु वाक्शतानां शतं बधः ॥ ४५ ॥

स्वस्थे कफे सन्धिरोगे मात्रा पञ्चशतं हितम् ।
कफे च षट्शतं कृष्णरोगे सप्तशतं मतम् ॥ ४६ ॥
दृष्टिरोगेष्वष्ट शतमधिमन्थे सहस्रकम् ।
सहस्रं वातरोगेषु धार्यमेवं हि तर्प्पणम् ॥ ४७ ॥
स्विन्नेन यवपिष्टेन स्नेहवीर्येरितं ततः ।
यथास्वं धूमपानेन कफमस्य विरेचयेत् ॥ ४८ ॥
एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यते परम् ।
तर्प्पणे तृप्ति लिङ्गानि नेत्रस्येमानि भावयेत् ॥ ४९ ॥
सुखस्वप्नाव बोधत्व वैशद्यं वर्णपाटवम् ।
निवृतिर्व्याधि शान्तिश्च क्रिया लाघव मेव च ॥ ५० ॥
अथ साश्रु गुरु स्निग्धं नेत्रं स्यादतितर्पणम् ।
रूक्षमस्राविलं भुग्ननेत्रं स्याद्धीन तर्प्पणम् ॥ ५१ ॥
रूक्षस्निग्धोपचाराभ्यामेतयोः स्यात्प्रतिक्रिया ।
[अथ पुटपाकः] अत ऊर्द्धं प्रवक्ष्यामि पुटपाकस्य साधनम् ॥५२॥
द्वौ विल्वमात्रौ मांसस्य पिण्डौ स्निग्धस्य पेषितौ ।
द्रव्याणां विल्वमात्रं तु द्रवाणां कुडवो मतः ॥ ५३ ॥
तदैकत्वं समालोड्य पत्रै रुपरि वेष्टितम् ।
पुटपाकेन तत्पक्वा गृह्णीयात्तद्रसं बुधः ॥ ५४ ॥
तर्प्पणोक्त विधानेन यथा वदवचारयेत् ।
दृष्टिमध्ये निषिच्य स्यान्नित्य मुत्तानशायिनः ॥ ५५ ॥
स्नेहनो लेखनश्चैव रोपणश्चेति स त्रिधा ।
हितः स्निग्धोऽति रूक्षस्य स्निग्धस्यापि हि लेखनः ॥ ५६ ॥
दृष्टेबलार्थमितरः पित्तासृगव्रण वातनुत् ।
सर्प्पिर्मांस वसामज्जामेदः स्वाद्वौषधैः कृतः ॥ ५७ ॥

स्नेहनः पुटपाकस्य धार्य्यौ द्वे वाक्शते हृषि ।
जाङ्गलानां यकृन्मांसैर्लेखन द्रव्यसंयुतैः ॥ ५८ ॥
सर्पिः लोह रजस्ताम्र शङ्खविद्रुम सिन्धुजैः ।
समुद्रफेनकासीसं स्रोतोजदधि मस्तुभिः ॥ ५९ ॥
लेखनो वाक्शतन्धार्य्यं तस्यैतावद्धि धारणम् ।
स्तन्य जाङ्गल मध्वाज्यतिक्तक द्रव्यपाचितः ॥ ६० ॥
लेखनात्त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः ।
वितरेत्तर्प्पणोक्तान्तु क्रियां व्यापत्ति दर्शने ॥ ६१ ॥
[अथ अञ्जनम्] ॥ अथ सम्यक्तदोषस्य प्राप्तमञ्जनमाचरेत् ।
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ॥ ६२ ॥
पूर्वाह्णे चापराह्णे वा ग्रीष्मे शरदि वेष्यते ।
वर्षास्वनभ्रे नात्युष्णे वसन्ते च सदैव हि ॥६३ ॥
लेखनं रोपणं चैव तथा स्यात् स्नेहनाञ्जनम् ।
लेखनं क्षारतीक्ष्णाम्लरसै रञ्जन मिष्यते ॥ ६४ ॥
कषायतिक्तरस युक् सस्नेहं रोपणं मतम् ।
मधुरं स्नेह-सम्पन्न मञ्जनं तु प्रसादनम् ॥ ६५ ॥
गुटिकारस-चूर्णानि त्रिविधान्यञ्जनानि च ।
कुर्य्याच्छलाकयाऽङ्गुल्या हीनानि च यथोत्तरम् ॥ ६६ ॥
श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे ।
अजीर्णे वेगघाते च नाञ्जनं संप्रशस्यते ॥ ६७ ॥
हरेणुमात्रां कुर्वीत वर्त्तिं तीक्ष्णाञ्जने भिषक् ।
प्रमाणं मध्यमे चार्द्धं द्विगुणं तु मृदौ भवेत् ॥ ६८ ॥
रसक्रिया तूत्तमा तु त्रिविडङ्गमिता हिता ।
मध्यमा द्विविडङ्गा स्याद्धीना त्वेक विडङ्गिका ॥ ६९ ॥

वैरेचनिकचूर्णं तु द्विशलाकं विधीयते।
रोपणं त्रिशलाकं स्याच्चतस्रः स्नैहिकेऽञ्जने॥ ७०॥
मुखयोः कुण्ठितास्तत्र शलाकाष्टाङ्गुलोन्मिता।
अश्मजा धातुजा वा स्यात्कलाय परिमण्डला॥ ७१॥
ताम्र लोहाश्म सञ्जाता शलाका लेखने मता।
सुवर्ण रजतोद्भूता शलाका स्नेहने मता॥ ७२॥
अङ्गुलीव मृदुत्वेन कथिता रोपणे बुधैः।
सायम्प्रातर्वाञ्जनं स्यात्तत्सदा नैव कारयेत्॥ ७३॥
नाति शीतोष्ण वाताभ्र वेलायां सम्प्रशस्यते।
कृष्णभागादधः कुर्य्यादपाङ्गं यावदञ्जनम्॥ ७४॥
[अथ वर्त्तिः] ॥ शङ्खनाभि र्बिभीतस्य मज्जा मथ्या मनःशिला।
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम्॥ ७५॥
छागी क्षीरेण सम्पिष्य वर्त्तिं कृत्वा यवोन्मिताम्।
हरेणु मात्रां संघृष्य जलैः कुर्य्यादथाञ्जनम्॥ ७६॥
तिमिरं मांसवृद्धिश्च काचं पटलमर्वुदम्।
रात्र्यन्धं कर्षिकं पुष्पं वर्त्तिश्चन्द्रोदया जयेत्॥ ७७॥
इति चन्द्रोदयावर्त्तिर्लेखनी
पलाश पुष्प स्वरसैः बहुशः परिभाविता।
करञ्जवीजवर्त्तिस्तु दृष्टेः पुष्पं विनाशयेत्॥ ७८॥
[लेखनीवर्त्तिः] सामुद्रफेन सिन्धूत्थ शङ्खद्राक्षवल्कलैः।
शिग्रुवीजयुते र्वर्त्तिः शुक्रादीन् शस्त्र वल्लिखेत्॥ ७९॥
दन्तै र्दन्ति वराहोष्ट्र गोहयाऽजखुरोद्भवैः।
शङ्ख मुक्ताम्भोधिफेनयुतैः सर्वैः विचूर्णितैः॥ ८०॥
दन्तवर्त्तिः क्षतास्तत्र शुक्राणां नाशिनी परा।

नीलोत्पलं शिग्रुवीजं नागकेसरकं तथा ॥ ८१ ॥

एतत् कल्कक्कतावर्त्ति रतिनिद्रां निवारयेत् ।

[रोपणीवर्त्तिः]तिल पुष्पाण्य शीतिः स्युःषष्टि संख्याःकणा कणाः८२

जात्याः कुसुमपञ्चाशतमरिचानि च षोड़श ।

सूक्ष्म पिष्टाजलैर्वर्त्तिः कृता कुसुमिकाऽभिधा ॥ ८३ ॥

तिमिराञ्जन शुक्राणां नाशनी मांसवृद्धिकृत् ।

एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्द्ध हरेणुका ॥ ८४ ॥

इति रोपणी कुसुमिकावर्त्तिः

रसाञ्जनं हरिद्रे द्वे मालती निम्बपल्लवाः ।

गोशकृद्रससंयुक्ता वर्त्तिर्नक्ताान्ध्य नाशनी ॥ ८५ ॥

इति रोपणीवर्तिः नक्ताान्ध्यहरी

अथ स्नेहनीवर्त्तिः] धा त्रयश्च पथ्यावीजानि एकद्वि त्रिगुणानि ।

पिष्टा वर्त्तिजलैः कुर्यादञ्जनं द्विहरेणुकम् ॥ ८६ ॥

नेत्रस्रावं हरत्याशु वातरक्तरुजं तथा ।

[अथ रसक्रिया] तुत्थमाक्षिक सिन्धूत्थ सिता शङ्खमनःशिला ८७

गैरिको दधिफेनश्च मरिचं चेति चूर्णयेत् ।

संयोज्य मधुना कुर्य्या दञ्जनार्थं रसक्रियाम् ॥ ८८ ॥

वर्त्मरोगार्मतिमिरकाच शुक्र हरम्परम् ।

लेखनी रसक्रिया] वटक्षीरेण संयुक्तो मुख्य कर्पूरजं रजः ॥८९॥

क्षिप्रमञ्जनतो हन्ति कुसुमं तु द्विमासिकम् ।

क्षौद्राश्वलालासङ्घृष्टै मरिचैर्नेत्र मञ्जयेत् ॥ ९० ॥

अतिनिद्रा शमं याति तमः सूर्योदयादिव[इति लेखनी रसक्रिया]

जाती पुष्पं प्रवालञ्च मरिचं कटुकं वचा ॥ ९१ ॥

सैन्धवं वस्तमूत्रेण पिष्टं तद्भावमञ्जनम् ।

वैरेचनिकचूर्णं तु द्विशलाकं विधीयते ।
रोपणं निःशलाकं स्यात्तस्तः सूचिकेऽञ्जने ॥ ७० ॥
मुखयोः कुण्ठितास्तस्या शलाकाष्टाङ्गुलोन्मिता ।
अश्मजा धातुजा वा स्यात्कलाय परिमण्डला ॥ ७१ ॥
ताम्र लोहाश्म सञ्जाता शलाका लेखने मता ।
सुवर्ण रजतोद्भूता शलाका सूचने मता ॥ ७२ ॥
अङ्गुलीव मृदुत्वेन कथिता रोपणे बुधैः ।
सायम्प्रातर्वाञ्जनं स्यात्तत्सदा नैव कारयेत् ॥ ७३ ॥
नाति शीतोष्ण वाताभ्र वेलायां सम्प्रशस्यते ।
कृष्णभागादधः कुर्य्यादपाङ्गं यावदञ्जनम् ॥ ७४ ॥
[अथ वर्त्तिः] ॥ शङ्खनाभि र्विभीतस्य मज्जा पथ्या मनःशिला ।
पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् ॥ ७५ ॥
छागी क्षीरेण सम्पिष्य वर्त्तिं कृत्वा यवोन्मिताम् ।
हरेणु मात्रां संघृष्य जलैः कुर्य्यादथाञ्जनम् ॥ ७६ ॥
तिमिरं मांसवृद्धिञ्च काचं पटलमर्वुदम् ।
रात्र्यन्धं कर्षिकं पुष्पं वर्त्तिश्चन्द्रोदया जयेत् ॥ ७७ ॥

इति चन्द्रोदयावर्त्तिं लेखनी

पलाश पुष्प स्वरसैः बहुशः परिभाविता ।
करञ्जवीजवर्त्तिस्तु दृष्टेः पुष्पं विनाशयेत् ॥ ७८ ॥
[लेखनीवर्त्तिः] सामुद्रफेन सिन्धूत्थ शङ्खद्राक्षावल्कलैः ।
शिग्रुवीजयुतै र्वर्त्तिः शुक्रादीन् शस्त्र वल्लिखेत् ॥ ७९ ॥
दन्तै र्दन्ति वराहोष्ट्र गोहयाऽजखरोद्भवैः ।
शङ्ख मुक्ताम्भोधिफेनयुतैः सर्वैः विचूर्णितैः ॥ ८० ॥
दन्तवर्त्तिः कृतास्तस्या शुक्राणां नाशिनी परा ।

नीलोत्पलं शिग्रुवीजं नागकेसरकं तथा ॥ ८१ ॥
एतत् कल्ककृतावर्त्ति रतिनिद्रां निवारयेत् ।
[रोपणीवर्त्तिः] तिल पुष्पाण्य शीतिः स्युः षष्टि संख्याः कणा कणाः ८२
जात्याः कुसुमपञ्चाशत्मरिचानि च षोड़श ।
सूक्ष्म पिष्टाजलैर्वर्त्तिः कृता कुसुमिकाऽभिधा ॥ ८३ ॥
तिमिराञ्जन शुक्राणां नाशनी मांसवृद्धिकृत् ।
एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्द्ध हरेणुका ॥ ८४ ॥
इति रोपणी कुसुमिकावर्त्तिः
रसाञ्जनं हरिद्रे द्वे मालती निम्बपल्लवाः ।
गोशकृद्रससंयुक्ता वर्त्तिर्नक्ताम्ध्य नाशनी ॥ ८५ ॥
इति रोपणीवर्तिः नक्ताम्ध्यहरी
अथ स्नेहनीवर्त्तिः] धा त्रश्च पथ्यावीजानि एकद्वि त्रिगुणानि ।
पिष्ट्वा वर्त्ति जलैः कुर्यादञ्जनं द्विहरेणुकम् ॥ ८६ ॥
नेत्रस्रावं हरत्याशु वातरक्तरुजं तथा ।
[अथ रसक्रिया] तुत्थमाक्षिक सिन्धूत्थ सिता शङ्खमनःशिला ८७
गैरिको दधिफेनश्च मरिचं चेति चूर्णयेत् ।
संयोज्य मधुना कुर्य्या दञ्जनार्थं रसक्रियाम् ॥ ८८ ॥
वर्त्मरोगार्मतिमिरकाच शुक्र हरम्परम् ।
लेखनी रसक्रिया] वटक्षीरेण संयुक्तो मुख्य कर्पूरजं रजः ॥८९॥
क्षिप्रमञ्जनतो हन्ति कुसुमं तु द्विमासिकम् ।
क्षौद्राश्वलालासङ्घृष्टै मरिचैर्नक्त मञ्जयेत् ॥ ९० ॥
अतिनिद्रा शमं याति तमः सूर्योदयादिव[इति लेखनी रसक्रिया]
जाती पुष्पं प्रवालश्च मरिचं कटुकं वचा ॥ ९१ ॥
सैन्धवं वस्तमूत्रेण पिष्टं तद्रावमञ्जनम् ।

शिरीष वीजगोमूत्र कृष्णामरिच सैन्धवैः ॥ ९२ ॥
अञ्जनं स्यात्प्रबोधाय सरसो न शिलावचैः ।
अथ रोपणी रसक्रिया]दार्व्वी पटोल मधुकं मरिचं पद्मकोत्पलम्॥९३
प्रपौण्डरीकञ्चैतानि पचेत्तोये चतुर्गुणे ।
विपाच्य पादशेषञ्च स्रुतं नीत्वा पुनः पचेत् ॥ ९४ ॥
शीते तस्मिन् मधु सितां दद्यात् पादांशिकां नरः ।
रस क्रियैषा दाहास्ररक्तरोग रुजो हरी ॥ ९५ ॥
[ रोपणीवर्त्तिः ] रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्र फेनो लवणं गैरिकं मरिचानि च ॥ ९६ ॥
एतत्समांश मधुना पिष्टा प्रक्लिन्न वर्त्मनि ।
अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ ९७ ॥
[रोपणी रसः] गुडूची स्वरसः कर्षः चौद्रं स्यान्माषकोन्मितम् ।
सैन्धवं चौद्रतुल्यं स्यात् सर्व्वमेकत्र मर्द्दयेत् ॥ ९८ ॥
अञ्जयेन्नयने तेन पिल्लार्म्म तिमिरं जयेत् ।
काचं कण्डूलिङ्गनाशं शुक्ल कृष्ण गतान् गदान् ॥ ९९ ॥
दुग्धेन कण्डू चौद्रेण नेत्र स्रावञ्च सर्पिषा ।
पुष्पं तैलेन तिमिरं काञ्जिकेन निशान्धताम् ॥ १०० ॥
पुनर्नवा जयेदाशु भास्कर स्तिमिरं यथा ।
बब्बूल दलनिःक्वाथो लेही भूत स्तदञ्जनात् ॥ १०१ ॥
नेत्र स्रावो व्रजत्याशु मधुयुक्तं नसंशयः ।
हिज्जलस्य फलं घृष्टा पानीये नित्यमञ्जनम् ॥ १०२ ॥
चक्षुः स्रावोपशान्त्यर्थं कार्य्यमेतं महौषधम् [रोपणी रसक्रिया]
[स्नेहनीरस क्रिया]कतकस्य फलं घृष्टा मधुना नेत्र मञ्जयेत्१०३
ईषत्कर्पूर सहितं स्मृतं नेत्र प्रसादनम् ।

नेत्र प्रसादनी रसक्रिया

सर्पिः क्षौद्रश्वाञ्जनं स्याच्छिरोत्पातस्य भेषजम् [स्नेहनी]

[चूर्णाञ्जनम्] कृष्णसर्प वसा शङ्ख कतका फलमञ्जनम् ॥ १०४ ॥

रसक्रिया सुखं सिद्धं दन्धानां दर्शन प्रदा ।

दन्ताण्डत्वक् शिला काच शङ्ख चन्दन सैन्धवैः ॥ १०५ ॥

द्रव्यैरञ्जन योगोऽयं पुष्पार्मादि विलेखनः । [लेखनचूर्णम्

कणाच्छाग यकृन्मध्ये पक्वा नेत्र युगेऽञ्जिता ।

अचिराद्धन्ति नक्तान्ध्यं तद्वत् सक्षौद्र मूषणम् ॥ १०६ ॥

[लेखनमञ्जनम् ] शाणार्द्धं मरिचं द्वौ च पिप्पल्य-र्णवफेनयोः

शाणार्द्धं सैन्धवं शाणं नवसौवीरकाञ्जनम् ॥ १०७ ॥

पिष्टं सूक्ष्मं चित्रायां चूर्णाञ्जनमिदं शुभम् ।

कण्डूका च कफार्त्तानां मलानाञ्च विशोधकम् ॥ १०८ ॥

लेखनं चूर्णाञ्जनम्] शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा

गृह्णीयात् तज्जलं सर्वं त्यजेच्चूर्णं मधोगतम् ॥ १०९ ॥

शुष्कञ्च तज्जलं सर्वं पर्पटी सन्निभं भवेत् ।

विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः ॥ ११० ॥

कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत् ।

अञ्जयेन्नयनं तेन सर्वदोषहरं हि तत् ।

सर्वरोग हरं चूर्णं चक्षुषः सुखकारि च ॥ १११ ॥

[मृदञ्जनम्] अग्नितप्तं हि सौवीरं निषिञ्चे त्रिफला रसैः ।

सप्तवेलं तथा स्तन्यैः स्त्रीणां सिक्तं विचूर्णितम् ।

अञ्जयेत्तेन नयने प्रत्यहं चक्षुषो हितम् ॥ ११२ ॥

सर्वानक्षि विकारांस्तु हन्यादेतन्न संशयः [प्रसादनं चूर्णाञ्जनम्]

त्रिफला भृङ्गशुण्ठीनां रसैस्तद्वच्च सर्पिषा ॥ ११३ ॥

गोमूत्र मध्वजा चीरैः सिक्तो नारः प्रतापितः ।
तच्छलाका हरत्येव सर्वांश्च भवान् गदान् ॥ ११४ ॥
[शलाकादृष्टि प्रसादिनी] गतदोषमपेतास्तु पश्यन्तं सम्यगक्षिसि
प्रच्याल्याक्षि यथा दोषं कार्य्यं प्रत्यञ्जनं ततः ॥ ११५ ॥
नचा निवृत्तिं दोषेऽक्षि धावनं संप्रयोजयेत् ।
प्रत्यञ्जनं तीक्ष्णतप्ते नेत्रे चूर्णः प्रसादनः ॥ ११६ ॥
[ स यथा ] शुद्धे नागे द्रुते शुद्धं तुल्यं सूतं विनिक्षिपेत् ।
कृष्णाञ्जनं तयोस्तुल्यं सर्वमेकत्र चूर्णयेत् ॥ ११७ ॥
दशमांशेन कर्पूरं तस्मिंश्चूर्णे प्रदापयेत् ।
एतत्प्रत्यञ्जनं नेत्र गदजिन्नयनामृतम् ॥ ११८ ॥

नयनामृतं प्रसादनं चूर्णाञ्जनम्

जयपाल भवां मज्जां भावयेन्निम्बुक द्रवैः ।
एकविंशति वेलं तु ततो वर्त्तिं प्रकल्पयेत् ।
मनुष्य लालया घृष्ट्वा ततो नेत्रे तथाञ्जयेत् ॥ ११९ ॥
सर्प्पदष्ट विषं जित्वा संजीवयति मानवम् । [ विषहरीवर्त्तिः ]
आयुर्वेद समुद्रस्य गूढार्थ मणि सञ्चयः ॥ १२० ॥
ज्ञातः कैश्चिद्बुधैस्तैस्तु कृत्वा विविध संहिताः ।
किञ्चिदर्थं ततो नीत्वा क्रियते संहिता मया ॥ १२१ ॥
कृपा कटाक्ष निक्षेपमस्यां कुर्व्वन्तु साधवः ।
विविध गदार्त्तिं दरिद्रनाशं हरि रमणीव करोति योग रत्नैः ।
विलसतु शार्ङ्गधरस्य संहिता सा कविहृदयेषु सरोज निर्मलेषु १२२

इति श्रीदामोदर सूनुना शार्ङ्गधरेण
विरचितायां संहितायां चिकित्सास्थाने
नेत्रप्रसादनकर्म्मविधिरध्यायः ।
समाप्ता इयं संहिता ।

| | | | |
|---|---|---|---|
| ३३ | भाषापरिच्छेद मुक्तावलीसहित | ... | १ |
| ३४ | बहुविवाहवाद | .. | । |
| ३५ | दशकुमारचरित—सटीक | .. | १॥ |
| ३६ | परिभाषेन्दुशेखर | .. | ॥। |
| ३७ | कविकल्पद्रुम (वोपदेवकृत) | ... | ॥ |
| ३८ | चक्रदत्त (वैद्यक) | ... | १॥ |
| ३९ | उणादिसूत्र—सटीक | ... | २ |
| ४० | मेदिनी कोष | ... | १ |
| ४१ | पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] | ... | २॥ |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ... | ॥ |
| ४३ | माधवचम्पू | ... | ।= |
| ४४ | तर्कसंग्रह (इंगाजी अनुवाद सहित) | ... | ॥ |
| ४५ | प्रसन्नराघव नाटक (श्रीजयदेव कवि रचित) | | १ |
| ४६ | विवेक चूड़ामणि [श्रीमत् शङ्कराचार्य्य विरचित] | | ।= |
| ४७ | काव्यसंग्रह [सम्पूर्ण] | ... | ५ |
| ४८ | लिङ्गानुशासन—सटीक | ... | । |
| ४९ | ऋतुसंहार—सटीक | ... | ।= |
| ५० | विक्रमोर्वशी—सटीक | ... | १॥ |
| ५१ | वसन्ततिलकभाण | ... | ।= |
| ५२ | गायत्री | ... | ॥ |
| ५३ | सांख्यदर्शन (भाष्य सहित) सांख्य प्रवचन भाष्य | | २ |
| ५४ | भोजप्रबन्ध | ... | ॥। |
| ५५ | नलोदय—सटीक | ... | ॥= |
| ५६ | ईश केन कठ, प्रश्न मुण्ड, माण्डूक्य, [सटीक स भाष्य] | | ५६ |
| ५७ | छान्दोग्य (उपनिषद्) सभाष्य-सटीक ] | | ५ |
| ५८ | तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक | ... ... | २ |
| ५९ | वृहदारण्यक (उपनिषद्) [भाष्य सहित] | | १० |
| ६० | सुश्रुत | ... | ४ |
| ६१ | शार्ङ्गधर [वैद्यक] | ... | १ |
| ६२ | वेतालपञ्चविंशति | ... | ॥।० |
| ६३ | पातञ्जलदर्शन [सभाष्य-सटीक] | ... | ४ |
| ६४ | आत्मतत्त्वविवेक [बौद्धाधिकार] | ... | २ |
| ६५ | मुक्तिकोपनिषत् | ... | = |

| | | |
|---|---|---|
| ६६ | उपमान चिन्तामणि ... | । |
| ६७ | नागानन्द नाटक ... | १ |
| ६८ | पूर्णप्रज्ञ दर्शनम् मध्वस्वामि कृत भाष्य सहितम् | २ |
| ६९ | चन्द्रशेखर चम्पू काव्यम् सम्पूर्ण ... | ३ |
| ७० | सामवेदस्य मन्त्र ब्राह्मणम् भाष्य सहितम् ... | २ |
| ७१ | आरण्य संहिता भाष्य सहिता ... | १ |
| ७२ | विद्धशाल भञ्जिका नाटिका—सटीक ... | १ |
| ७३ | कारण्डव्यूह [बौद्धशास्त्रम्] ... | २ |
| ७४ | कुवलयानन्द—सटीक ... | ३ |
| ७५ | प्रियदर्शिका नाटिका-सटीक [श्रीहर्ष विरचित] | ॥ |
| ७६ | सारस्वत व्याकरण—सटीक पूर्वार्द्ध ... | १। |
| ७७ | वासवदत्ता—सटीक ... | २ |
| ७८ | पुष्पवाण विलास काव्य [कालिदास कृत] सटीक | ॥ |
| ७९ | महिम्न शतकम्, पदारविन्द शतकम्, स्तुति शतकम्, मन्दस्मित शतकम्, कटाक्ष शतकम् ... | १ |
| ८० | मनुसंहिता-कुल्लुकभट्ट कृत टीका सहित ... | ५ |
| ८१ | नैषध चरितम् मल्लिनाथ कृत (टीका सहित) | १० |
| ८२ | चन्द्रालोक (प्राचीन अलङ्कार ग्रन्थ) ... | ।।० |
| ८३ | वीरमित्रोदय [स्मृति शास्त्र] ... | १० |
| ८४ | भावप्रकाश [वैद्यक] ... | १० |
| ८५ | प्रबोधचन्द्रोदय नाटक—सटीक ... | २ |
| ८६ | अनर्घराघव नाटक [मुरारि कृत] ... | २ |
| ८७ | दवतब्राह्मण सभाष्य ... | १ |
| ८८ | षड्विंश ब्राह्मण सभाष्य ... | १ |
| ८९ | मीमांसा परिभाषा ... | ॥ |
| ९० | अर्थ संग्रह (लौगाक्षी कृत) [मीमांसा] .. | ॥ |
| ९१ | रघुवंश —सटीक ... | १॥ |
| ९२ | मेघदूत—सटीक ... | ।॥ |
| ९३ | ईश्वर निरूपणम् [तर्कवाचस्पति कृतम्] | १ |
| ९४ | ईश्वरानुमान चिन्तामणि [गङ्गेशोपाध्याय कृत] | १ |
| ९५ | न्यायदर्शन [सभाष्य-सवृत्ति] ... | २॥ |


कलिकाता संस्कृत यन्त्र मन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य
सकाशात् लभ्यानि।

